वासुदेव उवाच ।
यथार्हति भवान्वक्तुमस्मिन्काल उपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ८
रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायामभिषिच्यन्तु सप्त वै ॥ ९
वैशंपायन उवाच ।
ततो द्रुपदमानाय्य विराटं शिनिपुंगवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिवम् ।
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ॥ १०
एतान्सप्त महेष्वासान्वीरान्युद्धाभिनन्दिनः ।
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ॥ ११
सर्वसेनापतिं चात्र धृष्टद्युम्नमुपादिशत् ।
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः ॥ १२
सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
सेनापतिपतिं चक्रे गुडाकेशं धनंजयम् ॥ १३
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
संकर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ॥ १४
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ।
प्राविशद्भवनं राज्ञः पाण्डवस्य हलायुधः ॥ १५
सहाक्रूरप्रभृतिभिर्गदसाम्बोल्मुकादिभिः ।
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ॥ १६
वृष्णिमुख्यैरभिगतैर्व्याघ्रैरिव बलोत्कटैः ।
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः ॥ १७
नीलकौशेयवसनः कैलासशिखरोपमः ।
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः ॥ १८
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ।
उदतिष्ठत्तदा पार्थो भीमकर्मा वृकोदरः ॥ १९
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन । C. 5. 5334 B. 5. 157. 21 K. 5. 157. 21

8 K4 B1.4.5 Dn1 Ds D6.8.10 कृष्णः; B3 विष्णुः; T G श्रीभगवान् (for वासुदेवः). — $^{a}$) T1 G4 यदार्हति. — $^{b}$) To avoid hiatus! K3.4 Dn1 Ds D6.8.10 ह्युप° (for उप°). — $^{c}$) K3 तथैवम्; B5 D3.4 T1 तदेवम् (for तथेदम्).

9 $^{a}$) D3.4 T2 G1.2 ते (for मे). — Ds2 om. (hapl.) $9^{bc}$. — $^{c}$) T2 G1.2.4 नायकान्. K5 M (except M1) सेनायाः; T1 G4 °सु (for °याम्). — $^{d}$) K4 B Dn1 Ds D6.7.10 क्रियतामिह; D1 G3 अभिषिंचंतु; D8 T1 G1 °षिंचतु; T2 G2 °षिंचत; G4 °षेक्तुं तु (for अभिषिच्यन्तु).

10 K5 om. (hapl.) $10^{de}$. — $^{d}$) K4 B5 पार्थिव. — $^{e}$) B2 युधां श्रेष्ठं; G1 च युद्धज्ञं (for च पाञ्चाल्यं).

11 $^{a}$) K4 B (except B2) Dn1 Ds D2–4.6–8.10 महाभागान् (for महेष्वासान्). — $^{b}$) K4.5 M धीरान् (for वीरान्). K4 B (except B2) Dn1 Ds D3.4.6–8.10 °कांक्षिणः.

12 $^{b}$) K4 B (except B2) Dn1 Ds D3.4.6.7.10 चकार ह; T G अथादिशत् (for उपादिशत्). — D1 om. $12^{c}$–$13^{b}$. — $^{c}$) K (except K4) °हेतुर्. T2 G1–3 उत्पन्नं. — G4 om. $12^{d}$–$14^{a}$. — $^{d}$) B2 महत्वात्; D10 य इष्टात्; T2 G1–3 समिद्धात् (for य इद्धात्). Ca cites इद्धात्.

13 D1 om. $13^{ab}$; G4 om. 13 (cf. v.l. 12); B3 om. $13^{bc}$. — $^{b}$) D3.4.8.10 समेतानां; B2 शूराणां सु-; D7 प्रणेतॄणां; T1 समृद्धानां; T2 G2 सप्तानां सु- (for समस्तानां). — $^{c}$) G3 सेनापतिं परं चक्रे.

14 G4 om. $14^{a}$ (cf. v.l. 12). — $^{a}$) K5 अस्य; D7 एव (for अपि). D3.4 नेतारं (for नेता च). — $^{b}$) D3.4 यंतारं (for संयन्ता). K5 यंता चैवापि वाजिनां.

15 $^{a}$) K4 Dn1 D7.8 G3 M3–5 तं (for तद्). G4 अव° (for उप°). — $^{c}$) K1.2 आविशद्. K5 प्राज्ञः; B Dn1 D1 राजन् (for राज्ञः). — K4 om. $15^{d}$–$17^{a}$. — $^{d}$) B D1.7 पांडवानां; G2 धर्मज्ञस्य (for पाण्डवस्य).

16 K4 om. 16 (cf. v.l. 15). — $^{b}$) K3.5 शांब- (for साम्ब-). B1.4.5 Dn1 Ds D6.10 T2 G1.2 -उद्धव- (for -उल्मुक-). — $^{c}$) D10 (m as in text) रौहिणेय- (for रौक्मिणेय-). T G1.2.5 -युतैः (for -सुतैः). K1.2 रौक्मिणेयाद्दृ(K2 °हृ)तिशुकैः.

17 K4 om. $17^{a}$ (cf. v.l. 15). — $^{a}$) K5 °वीरैर् (for °मुख्यैर्). K5 B3–5 Dn1 D1.3.4.7 M1.2.4 अधिगतैर्; Ds D6.8.10 उपगतैर्; D2 अधिगतो; M3.5 अभिगतो. — $^{b}$) K3 D1.7 S मदो° (for बलो°).

18 $^{a}$) B2.3 °कौषेय°. — $^{b}$) Some N MSS. कैलाश°.

19 $^{c}$) D3.4.7.8 G3 उदतिष्ठन् (for उदतिष्ठत्). K3.4 B (except B2) Dn1 Ds D1.6.3.10 ततः पार्थो; K5 G4 M3.5 तथा पार्थो; D7 महाबाहो.

20 $^{a}$) A few MSS. गांजीवधन्वा. — $^{b}$) D1 भारत (for केचन). — $^{cd}$) T1 G1 ततः (for ते स्म). K3.4 B Dn1 Ds D1.6.8.10 G4 °चक्रिरे ते वै (B3 Ds2 तं वै; D8 सर्वे; G4 [ऽ]भ्येत्य) समायांतं (Dn1 Ds D10 समायातं; G4 ततः सर्वे) हलायुधं.

C. 5. 5335
B. 5. 157. 22
K. 5. 157. 21
पूजयांचक्रुरभ्येत्य ते स्म सर्वे हलायुधम् ॥ २०
ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ।
वासुदेवपुरोगास्तु सर्व एवाभ्यवादयन् ॥ २१
विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ।
युधिष्ठिरेण सहित उपाविशदरिंदमः ॥ २२
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ २३
भवितायं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ २४
अस्माद्युद्धात्समुत्तीर्णानपि वः ससुहृज्जनान् ।
अरोगानक्षतैर्देहैः पश्येयमिति मे मतिः ॥ २५
समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ।
विमर्दः सुमहान्भावी मांसशोणितकर्दमः ॥ २६
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
संबन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ २७
पाण्डवा हि यथास्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां युक्त्या सपर्येति पुनः पुनः ॥ २८
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निविष्टः सर्वभावेन धनंजयमवेक्ष्य च ॥ २९
ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ३०
न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ॥ ३१
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ॥ ३२
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
न हि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् ॥ ३३
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ॥ ३४

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

21 $^{a}$) $T_{1}$ $G_{4.5}$ रामं; $G_{1}$ राजन् (for राजा). — $^{c}$) $K_{4}$ $B_{1.2.4.5}$ $Dn_{1}$ $Ds$ $D_{1.6.8.10}$ $M_{4}$ तं; $K_{5}$ $B_{8}$ $M_{8.5}$ ते (for तु). — $^{d}$) $T_{2}$ $G_{2}$ M °पूज° (for °वाद°).

22 $^{d}$) $K_{1}$ $D_{8.4.7}$ $M_{5}$ °दम (for °दमः).

☞ The fragm. MS. $G_{4}$ *ends* with $23^{ab}$! It is mostly ignored hereafter.

23 $^{d}$) $D_{8.4}$ (?gloss) बलदेवो (for रौहिणेयो).

24 $^{b}$) $T_{2}$ $G_{2}$ $M_{8}$ पुरुषर्षभ. — $24^{cd}$ = 5. 193. $52^{ab}$. — $^{c}$) $K_{1.2}$ एव (for एतद्). $D_{8.4}$ अहं; Ca. d ध्रुवं (as in text).

25 $^{a}$) $K_{8.4}$ B (except $B_{2}$) $Dn_{1}$ $Ds$ $D_{8.4.6.10}$ तस्माद्. — $^{b}$) S (except $G_{5}$) °सुहृद्गणान्. — $^{d}$) $K_{4}$ B (except $B_{2}$) $Dn_{1}$ $Ds$ $D_{8.4.6.8.10}$ द्रष्टास्मीति मतिर्मम.

26 $^{c}$) $K_{8}$ $B_{4.5}$ $Dn_{1}$ $D_{6}$ च (for सु-).

27 $^{b}$) $B_{8}$ °प्लवे; Ca. s °ह्वरे (as in text). — $^{d}$) $M_{2}$ यायास्त्वं (for वर्तस्व).

28 $K_{5}$ $Dn_{1}$ om. (hapl.) $28^{a}$–$29^{b}$. — $^{c}$) $D_{8.4}$ अस्य (for तस्य). M (except $M_{1}$) हि (for [अ]पि). $K_{8.4}$ $B_{1.4.5}$ $D_{6.10}$ Ca साह्यं; $B_{8}$ शक्त्या; $Ds$ $D_{8}$ सख्यं; T $G_{2.8.5}$ युक्ता (for युक्त्या).

29 $K_{5}$ $Dn_{1}$ om. $29^{ab}$ (cf. v.l. 28). — $^{c}$) $K_{8}$ B (except $B_{2}$) $Dn_{1}$ $D_{1.8.4.6}$ निर्विष्टः; $Ds$ निसृष्टः. — $^{d}$) $K_{8.4}$ B (except $B_{2}$) $Dn_{1}$ $Ds$ $D_{6.8.10}$ ह्य (for च).

30 $^{a}$) K (except $K_{4}$) $D_{1}$ ध्रुवं (for ध्रुवो). — $^{c}$) S यथा (for तथा). $K_{4}$ $Ds$ $D_{8.10}$ ह्यरिविनाशोयं; $K_{5}$ [अ]स्याभिनिवेशोयं. — $^{d}$) $K_{1.2}$ $B_{2}$ दृश्यते (for भारत).

31 $^{ab}$) $T_{2}$ $G_{2.5}$ transp. कृष्णम् and लोकम्. — $^{c}$) $K_{5}$ $D_{2.7}$ S अतो (for ततो). $T_{2}$ $G_{5}$ °पश्यामि (for °वर्तामि).

32 $^{a}$) $B_{2}$ एतौ (for उभौ). — $^{c}$) $K_{1}$ $D_{8}$ °स्नेहोस्मि ते; $B_{8}$ °स्नेहगतौ; $T_{2}$ °स्नेहो यथा; $G_{2}$ °स्नेहोस्म्यहं; $G_{5}$ °स्नेहोप्यतो. — $^{d}$) $K_{1.2}$ $B_{2}$ $D_{10}$ $G_{8}$ नृप (for नृपे).

33 $T_{2}$ $G_{2}$ om. (hapl.) $33^{cd}$. — $^{c}$) $T_{1}$ कौरव्यं (for °व्यान्). — $^{d}$) $K_{4}$ $D_{2}$ $G_{1.8.5}$ अत्रेक्षितुं; $D_{1.8.4}$ उदी° (for उपे°). $T_{1}$ नश्यमानमवेक्षितुं.

34 Before 34, S ins. वैशं°. — $^{b}$) $G_{8}$ बांधवैः (for पाण्डवैः). — $^{d}$) $K_{2.5}$ निर्वर्त्य; T G निमंत्र्य; Ca. d as in text.

Colophon. $Dn_{2}$ $D_{5.9}$ $G_{4}$ missing. — *Sub-parvan:* $K_{1.2}$ $D_{7}$ $T_{1}$ अभिनिर्याणयात्रा; $K_{8}$ निर्याणयात्रा; $K_{4}$ $B_{1.4.5}$ $Dn_{1}$ $Ds$ $D_{6.8.10}$ M अभिनिर्यात्रा; $B_{8}$ अभियात्रा; $D_{2}$ अभियानयात्रा. — *Adhy. name:* $K_{5}$

## १५५

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः ।
हिरण्यलोम्नो नृपतेः साक्षादिन्द्रसखस्य वै ॥ १
आहृतीनामधिपतेर्भोजस्यातियशस्विनः ।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः ॥ २
यः किंपुरुषसिंहस्य गन्धमादनवासिनः ।
शिष्यः कृत्स्नं धनुर्वेदं चतुष्पादमवाप्तवान् ॥ ३
यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा ।
शार्ङ्गेण च महाबाहुः संमितं दिव्यमक्षयम् ॥ ४
त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम् ।
वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ॥ ५
शार्ङ्गं तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः ।
धारयामास यत्कृष्णः परसेनाभयावहम् ॥ ६
गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः ।
द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ॥ ७
संछिद्य मौरवान्पाशान्निहत्य मुरमोजसा ।
निर्जित्य नरकं भौममाहृत्य मणिकुण्डले ॥ ८
षोडश स्त्रीसहस्राणि रत्नानि विविधानि च ।
प्रतिपेदे हृषीकेशः शार्ङ्गं च धनुरुत्तमम् ॥ ९
रुक्मी तु विजयं लब्ध्वा धनुर्मेघसमस्वनः ।
विभीषयन्निव जगत्पाण्डवानभ्यवर्तत ॥ १०
नामृष्यत पुरा योऽसौ स्वबाहुबलदर्पितः ।
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ॥ ११
कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्यामि केशवम् ।
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरम् ॥ १२
सेनया चतुरङ्गिण्या महत्या दूरपातया । C. 5. 5362 B. 5. 158. 12 K. 5. 158. 12

---

हलधरवाक्यं; $T_1$ M बलदेवनिर्गमनं ($T_1$ °निवृत्तिः); $G_5$ बलदेवतीर्थयात्रानिर्याणं. — *Adhy. no.* (figures, words or both): Ds 47 (=147); $T_1$ $G_{1.2.5}$ 158; $T_2$ M 157 ($M_4$ 156); $G_3$ 155. — *S'loka no.:* $K_5$ 34; $Dn_1$ 35.

### 155

☞ This adhy. is missing in $Dn_2$ (cf. v.l. 5. 143. 2); the MS. is mostly ignored here.

1 $^{b}$) $D_7$ सुतो नृपः (for महा°). — $^{c}$) $K_4$ B $Dn_1$ Ds $D_{1.6.8.10}$ °रोम्णो (for °लोम्नो).

2 $^{a}$) $K_1$ $Ds_2$ $T_1$ $G_3$ आहु($K_1$ °हू)तीनाम्; $K_2$ आह्वतीनाम्; $K_{3.4}$ B $Dn_1$ $D_6$ आकूती($Dn_1$ °ति)नाम्; $K_5$ आरुतीनाम्; $Ds_1$ $D_1$ $M_2$ आह्नतीनाम्; $D_{7.8}$ $T_2$ $G_{1.2.5}$ आहु($D_8$ °हू)कानाम्. $K_{3.5}$ $B_{2.4.5}$ $Dn_1$ Ds $D_{1-4.6.7.10}$ $T_2$ $G_2$ अधिपतिः. — $^{b}$) $K_5$ $D_7$ $G_3$ अपि (for अति-). — $^{c}$) $K_5$ $D_{2.7}$ द($K_5$ दा)क्षिणाधिपतेः; Ds °पतिः.

3 $^{c}$) $K_{3.4}$ $B_5$ $Dn_1$ Ds $D_{6.10}$ $T_1$ transp. शिष्यः and कृत्स्नं.

4 $^{b}$) A few MSS. गांजीव°. $B_5$ $D_7$ Ca °धन्वना (for °तेजसा). — $^{c}$) $K_5$ S °बाहो. — $^{d}$) $M_{1.2}$ नित्यम् (for दिव्यम्). $K_4$ $Dn_1$ Ds $D_{6.8.10}$ दिव्यलक्षणं; $D_2$ दिवि पूजितं; $D_{3.4}$ दिव्यमव्ययं (for दिव्यमक्षयम्).

5 $^{a}$) $B_3$ च (for [ए]व). $K_2$ $G_5$ तानि ($K_2$ एतानि also as in text). — $^{c}$) $K_2$ चैव (for तत्र). $K_5$ गांजिवं वारुण तत्र.

6 $K_{1.2}$ om. (hapl.) $6^{ab}$. — $^{a}$) $B_3$ $G_1$ च; T $G_{2.3.5}$ M हि (for तु). $D_{3.4}$ $G_1$ चाहुः (for प्राहुः). — $^{b}$) $K_3$ *repeats* $4^{d}$ for $6^{b}$ (v.l. संमतं for संमितं). — $^{c}$) $K_{3.4}$ B $Dn_1$ Ds $D_{1.3.4.6.7.10}$ $T_2$ $G_{1.2.5}$ तत् (for यत्). — $^{d}$) K (except $K_4$) $B_2$ $D_{1.2.7}$ °भयंकरं.

7 $^{a}$) A few MSS. गांजीवं. Ds $G_3$ पांडवः (for पावकात्). — $^{c}$) $K_5$ अन्यद्; $G_5$ इंद्राद् (for द्रुमाद्). — $^{d}$) Ds S सम°; Ca प्रत्य° (as in text).

8 $^{b}$) $K_{1.2}$ असुरम्; $K_{3-5}$ B $Dn_1$ Ds $D_{1-4.6.7.10}$ मुरुम् (for मुरम्).

10 $^{b}$) K (except $K_1$) $B_{3-5}$ $Dn_1$ Ds $D_{1.3.4.6.8.10}$ $M_1$ °निभ° (for °सम°).

11 $^{b}$) $K_4$ B $Dn_1$ Ds $D_{6.8.10}$ °गर्वितः. — $^{d}$) $K_{1.2.5}$ $B_2$ $D_{1.7}$ वीर्यवान् (for धीमता).

12 $^{b}$) $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{6.8.10}$ निवर्तिष्ये जनार्दनं. — $^{c}$) $G_1$ अन्वयाच्च (for अन्वधावद्). — $^{d}$) B Ds $D_{1-4.10}$ वरः; $Dn_1$ वर (for वरम्).

13 $^{a}$) $K_4$ $D_8$ सेनया च वरूथिन्या. — $B_2$ om. (hapl.) $13^{bc}$. — $^{b}$) $K_{1.5}$ दूरया तया; $B_3$ त्वरया तया (for दूरपा°). — $^{c}$) $K_4$ $D_8$ विचित्रवीर्यधर्मिण्या.

C. 5. 5362 B. 5. 158. 13 K. 5. 158. 13 विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया ॥ १३
स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम् ।
व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनम् ॥ १४
यत्रैव कृष्णेन रणे निर्जितः परवीरहा ।
तत्र भोजकटं नाम चक्रे नगरमुत्तमम् ॥ १५
सैन्येन महता तेन प्रभूतगजवाजिना ।
पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ॥ १६
स भोजराजः सैन्येन महता परिवारितः ।
अक्षौहिण्या महावीर्यः पाण्डवान्समुपागमत् ॥ १७
ततः स कवची खड्गी शरी धन्वी तली रथी ।
ध्वजेनादित्यवर्णेन प्रविवेश महाचमूम् ॥ १८
विदितः पाण्डवेयानां वासुदेवप्रियेप्सया ।
युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् ॥ १९
स पूजितः पाण्डुसुतैर्यथान्यायं सुसत्कृतः ।
प्रतिपूज्य च तान्सर्वान्विश्रान्तः सहसैनिकः ।
उवाच मध्ये वीराणां कुन्तीपुत्रं धनंजयम् ॥ २०
सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव ।
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः ॥ २१
न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
निहत्य समरे शत्रूंस्तव दास्यामि फल्गुन ॥ २२
इत्युक्तो धर्मराजस्य केशवस्य च संनिधौ ।
शृण्वतां पार्थिवेन्द्राणामन्येषां चैव सर्वशः ॥ २३
वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम् ।
उवाच धीमान्कौन्तेयः प्रहस्य सखिपूर्वकम् ॥ २४

---

14 $^{a}$) $K_4$ $D_{3.4.8}$ S समासाद्य तु ( $K_4$ $D_{3.4.8}$ च) वा°. — $^{b}$) $K_{1.2}$ $Dn_1$ $D_8$ योगि( $D_8$ °गी )नां; $G_1$ गोपानां; Cd योगानां (as in text). $G_5$ ऋषभं (for ईश्वरं). $K_5$ गुरुं (for प्रभुम्). $T_2$ $G_2$ सर्वशस्त्रभृतां वरं. — After $14^{ab}$, $B_2$ ins.:

551* कृतप्रतिज्ञो राजासौ वासुदेवेन निर्जितः ।

— $^{c}$) $K_5$ $D_6$ विजितः; $D_7$ ध्वंसि°; $D_{10}$ भ्रंशि°; $T_2$ $G_{1.2.5}$ हिंसि°; $M_5$ (by corr.) निर्जि°; Ca. d व्यंसि° (as in text). $K_5$ $G_5$ $M_{1.2.4}$ (by corr.) राजा; $M_{3.4}$ (before corr.).$_5$ राज्ञा (for राजन्).

15 $^{a}$) $K_{1.2.5}$ $D_{2.7}$ पुरा (for रणे). $B_3$ तत्र कृष्णेन हि रणे; $B_4$ यत्रैव निर्जितो राजन्. — $^{b}$) $B_4$ कृष्णेन (for निर्जितः). — $^{d}$) $K_{3.4}$ $B_{2.4.5}$ $Dn_1$ Ds $D_{6.8.10}$ कृतं (for चक्रे).

17 $^{ab}$) $Ds_2$ भोजः सैन्येन महता परिवार्य महामतिः. — $^{c}$) Some S MSS. अक्षोहिण्या. — $^{d}$) $K_4$ $B_{2.4.5}$ $Dn_1$ Ds $D_{6.8.10}$ क्षिप्रमागमत्; $D_{3.4}$ समुपागतः.

18 $^{a}$) $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{6.8.10}$ धन्वी (for खड्गी). — $^{b}$) $G_1$ transp. शरी and तली; $G_3$ transp. तली and रथी. $D_{2-4}$ बली (for तली). $K_4$ B (except $B_2$) $Dn_1$ Ds $D_{6.8.10}$ तली खड्गी शरासनी; $T_2$ $G_2$ वीरधन्वी शरी रथी. $B_3$ *repeats* $18^{ab}$ with v.l. [ धन्वी (for खड्गी in $^{a}$) and खड्गी शरी तली रथी (for $^{b}$). ] — $^{c}$) T $G_{2.3.5}$ $M_{1.2}$ रथेन; $M_{3-5}$ गजेन (for ध्वजेन). $K_{1.2.5}$ $B_{3.5}$ $D_7$ °रूपेण.

19 $^{b}$) $K_{1.2.5}$ Ds $D_{3.4}$ °प्रियेच्छया. — $^{d}$) $K_2$ $D_{3.4}$ अभिपू° (for अभ्यपू°).

20 $B_2$ om. $20^{abcd}$. — $^{a}$) $Dn_1$ $G_3$ सुपूजितः. $K_3$ $B_{1.3.4}$ $Dn_1$ Ds $D_{1.2.6}$ T $G_{1-3}$ पांडुपुत्रैः. — $^{b}$) $K_4$ $B_{1.5}$ $Dn_1$ Ds $D_{6.10}$ सुसंस्तुतः; $K_5$ सुतोषितः; $B_3$ स्वयं स्तुतः; $B_4$ समंततः; $D_{1.7.8}$ सुसंस्कृतः (for सुसत्कृतः). — $^{c}$) $K_4$ $B_4$ Ds $D_{3.4.6.10}$ °गृह्य; $Dn_1$ °गृह्णात् (for °पूज्य). $K_4$ $B_5$ $Dn_1$ $D_{3.4.6}$ तु (for च). K (except $K_4$) $D_7$ transp. तान् and सर्वान्. — $^{d}$) $B_{1.3.5}$ $D_7$ $T_1$ $G_1$ सह सैनिकैः.

21 $^{a}$) $K_4$ $B_{1-3}$ Ds $D_{2-4.7}$ सा( $D_2$ स )हाय्ये (for सहायो). $Dn_1$ $Ds_2$ $D_{2.7.10}$ अस्मिन् (for अस्मि). — $^{c}$) $B_2$ रणं (for रणे). $B_2$ पार्थ; $B_3$ सत्यम्; Ds $D_{3.4.7}$ $M_5$ सह्यम् (for साह्यम्). — $^{d}$) $K_3$ $B_3$ $D_{3.4}$ अशक्यं; $D_7$ प्रसह्य (for असह्यं). $D_7$ शत्रुभिस्तव (by transp.).

22 $^{b}$) $M_{3.5}$ इति (for इह). — After $22^{ab}$, N ( $Dn_2$ missing ) ins.:

552* हनिष्यामि रणे भागं यन्मे दास्यसि पाण्डव ।
अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ।
अथ वा सर्व एवैते तिष्ठन्तु वसुधाधिपाः ।

[ (L. 1) $K_{1.2.5}$ $D_7$ यं मे (for यन्मे). — (L. 2) $D_7$ महारथौ (for अथो पुनः). ]

— $^{d}$) S यास्यामि. $K_{1-3}$ फाल्गुन; $K_{4.5}$ B $Dn_1$ Ds $D_{3.4.6-8.10}$ मेदिनीं.

23 $D_1$ om. $23^{ab}$. — $^{a}$) $D_{3.4}$ $T_1$ इत्युक्ते. — $^{b}$) K (except $K_4$) $B_2$ $D_7$ संनिधौ केशवस्य च ( $K_3$ तु). — $^{d}$) $K_5$ भारत (for सर्वशः). $K_{1.2}$ सर्वेषा चव भारत.

24 $^{c}$) $K_{1.2.5}$ $B_2$ $D_{1.7}$ वाक्यं (for धीमान्). — $^{d}$) $D_{3.4}$ प्रहसन्; $D_{10}$ $M_2$ प्रसह्य (for प्रहस्य). $D_{3.4}$ सख्य°;

युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥ २५
तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कः सहायस्तदाभवत् ॥ २६
निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कः सहायस्तदाभवत् ॥ २७
तथा विराटनगरे कुरुभिः सह संगरे ।
युध्यतो बहुभिस्तात कः सहायोऽभवन्मम ॥ २८
उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं द्रोणं च माधवम् ॥ २९
धारयन्गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ।
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ॥ ३०
कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ।
द्रोणं व्यपदिशञ्शिष्यो वासुदेवसहायवान् ॥ ३१
कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीत्ययशस्करम् ।
वचनं नरशार्दूल वज्रायुधमपि स्वयम् ॥ ३२
नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ।
यथाकामं यथायोगं गच्छ वान्यत्र तिष्ठ वा ॥ ३३
विनिवर्त्य ततो रुक्मी सेनां सागरसंनिभाम् ।
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ॥ ३४
तथैव चाभिगम्यैनमुवाच स नराधिपः ।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ३५
द्वावेव तु महाराज तस्माद्युद्धाद्व्यपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिपः ॥ ३६
गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ।
उपाविशन्पाण्डवेया मन्त्राय पुनरेव हि ॥ ३७
समितिर्धर्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकाचित्रा द्यौश्चन्द्रेणेव भारत ॥ ३८ C. 5. 5390 B. 5. 158. 40 K. 5. 158. 39

इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

---

$G_1$ स्मित° (for सखि°).

☞ For stanzas 25–29 cf. lines 6–11 and 13–15 of passage No. 39 of App. I of the Virāṭaparvan.

**25** Before 25, $T_1$ $G_1$ ins. धनंजयः; $T_2$ अर्जुनः. — $^d$) $K_{2.5}$ $B_{1.2}$ $D_{1.3.4.7}$ $T_2$ $G_2$ सखे (for सखा).

**26** See note above. $T_2$ $G_2$ om. (hapl.) 26. — $^a$) $G_{3.5}$ तदा (for तथा). — $^d$) $G_3$ कस्तदा यः सखाभवत् (cf. v.l. 27).

**27** See note above. $K_4$ $D_{2-4}$ om. (hapl.) 27. $K_{1-3.5}$ $B_2$ $D_{1.7}$ transp. 27 and 28. — $^b$) K ($K_4$ om.) कालिकेयैश्च; $D_7$ कालखंजै°. — $^d$) $G_3$ कस्तदा यः सखाभवत् (cf. v.l. 26).

**28** See note above. $K_{1-3.5}$ $B_2$ $D_{1.7}$ transp. 27 and 28. — $^a$) $T_2$ $G_2$ तदा (for तथा). — $^b$) $B_2$ $D_{10}$ संगमे; $D_{1.2.7}$ S °युगे (for °गरे). — $^c$) $K_4$ B $Dn_1$ $D_3$ $D_{1.3.4.6.8.10}$ $G_5$ तत्र (for तात). — $^d$) $K_2$ कः सहायस्तदाभवत् (= $26^d$, $27^d$). — After 28, $K_{1.2}$ $D_1$ S read 31.

**29** See note above. — $^a$) $G_{1.5}$ उपजीवन्; $G_3$ °गम्य (for °जीव्य). $K_{3.5}$ गुरुं द्रोणं (for रणे रुद्रं). — $^d$) K (except $K_4$) $T_2$ G $M_2$ कृष्णं (for द्रोणं). $K_{3.5}$ शंकरं (for माधवम्).

**30** $^d$) $B_2$ °स्वशरसंवृतः; $M_{3-5}$ °स्त्रैः परिबृं°.

**31** $K_{1.2}$ $D_1$ S read 31 after 28. — $^c$) $K_1$ $D_3$ $D_{2.7}$ **Ca. d. s** शिल्पे; $K_2$ शल्ये (for शिष्यो). — After 31, $K_5$ B $Dn_1$ $D_3$ $D_{1.3.4.6-8.10}$ ins.:

553* भीतोऽस्मीति कथं ब्रूयां दधानो गाण्डिवं धनुः ।

**32** $^b$) $K_{3.4}$ $B_4$ $Dn_1$ $D_3$ $D_{6.8.10}$ यशोहरं (for [अ]यशस्करम्). — $^c$) $D_1$ S राज° (for नर°).

**33** $D_6$ om. from $33^b$ up to सागर (in $34^b$). — $^b$) $G_1$ सहायार्थं च. — $^d$) $D_{3.4}$ वाप्यत्र; S वात्रैव (for वान्यत्र). — After 33, S ins.:

554* तच्छ्रुत्वा वचनं तस्य विजयस्य च धीमतः ।
[ $M_{3-5}$ स (for च). ]

**34** $D_6$ om. up to सागर (cf. v.l. 33). — $^a$) $D_1$ $G_3$ विनिवृत्य. — $^c$) $B_3$ समा° (for उपा°).

**35** $^a$) $K_{1.2.5}$ $B_2$ $D_{2.7}$ °संगम्य; $D_{3.4}$ °गम्यैवं; T G °गम्याथ (for °गम्यैनम्). — $^b$) $K_{1.2.5}$ $B_2$ $D_{2.7}$ प्रोवाच (for उवाच). $K_{3.4}$ $B_{1.5}$ $Dn_1$ $D_3$ $D_{1.6.8.10}$ वसुधा° (for स नरा°). — $^d$) $D_1$ °मानवान् (for °मानिना).

**36** $^a$) $D_7$ तौ (for तु). $K_5$ °भाग; $T_1$ °राजन् (for °राज). — $^b$) $K_5$ युद्धात्तस्माद् (by transp.); $T_1$ अस्माद्युद्धाद्. $K_{3.4}$ B (except $B_2$) $Dn_1$ $D_3$ $D_{3.4.6.8.10}$ **Ca**

# १५६

C. 5. 5301
B. 5. 159. 1
K. 5. 159. 1

जनमेजय उवाच ।
तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ ।
किमकुर्वन्त कुरवः कालेनाभिप्रचोदिताः ॥ १
वैशंपायन उवाच ।
तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ ।
धृतराष्ट्रो महाराज संजयं वाक्यमब्रवीत् ॥ २
एहि संजय मे सर्वमाचक्ष्वानवशेषतः ।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ३
दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम् ।
यदहं जानमानोऽपि युद्धदोषान्क्षयावहान् ॥ ४
तथापि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम् ।
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ॥ ५
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी ।
दुर्योधनं समासाद्य पुनः सा परिवर्तते ॥ ६
एवं गते वै यद्भावि तद्भविष्यति संजय ।
क्षत्रधर्मः किल रणे तनुत्यागोऽभिपूजितः ॥ ७
संजय उवाच ।
त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।

---

अपेयतु; T2 G2 व्यपोहितौ (for व्यपेयतुः). — c) D2-4 तु (for च). — d) K3.5 B3.5 Dn1 D1.7.10 वसुधाधिप; S स नराधिपः (G1 भरतर्षभ).

37 b) T1 G2.3.5 तदा (for तथा). — d) K3.4 Dn1 D5 D6.8.10 च; B (except B2) D2-4 तु (for हि).

38 a) D1 संमतिर्. — b) K1.2 °शताकुला; B3.5 पार्थिवैश्च (B5 °वैः सा) समा°. — c) K3.4 B (except B2) Dn1 D5 D6.8.10 तारकैश्च (for तारका). — d) T2 च चंद्रेण; G5 सचंद्रेण (for चन्द्रेणेव). K1-3.5 D1.7 शारदी (for भारत).

Colophon. Dn2 D6.9 G4 missing. — *Sub-parvan:* K1.2 B2 D7 T1 G5 अभिनिर्याणयात्रा; K3 सैन्ययात्रा; K4 B1.3.4 Dn1 D5 D6.8.10 M1.2 अभिनिर्यात्रा (D10 °णं); D2 अभियात्रा: to it K1-3 D7 add समाप्ता. — *Adhy. name:* B5 सैन्ययात्रा; D1 T1 G5 हस्तिरथ(G5 °क्षी °)सत्वाख्यानं; M1.2 हस्तिरथ(M2 °सिम)विसर्गः. — *Adhy. no.* (figures, words or both): D6 48 (=148); T1 G1.2.5 159; T2 M 158 (M4 157); G3 156. — *S'loka no.:* K5 39; Dn1 40.

## 156

☞ This adhy. is missing in Dn2 (cf. v.l. 5. 143. 2); the MS. is mostly ignored here.

1 b) D2 T2 G2 यत्तेषु भरतर्षभ (D2 °भाः) (=2b); T1 G1.3.5 M युद्धाय भरतर्षभाः (cf. v.l. 2b) — D10 om. (hapl.) 1c-2b. — c) K3.4 B4.5 Dn1 D5 D1.6.8 किमकुर्वंश्च; B1.3 किमकुर्वत. G5 कौरव्याः. — d) K1.2.5 °प्रचोदिताः.

2 D10 om. 2ab (cf. v.l. 1). — a) =1a. D3 अथ; G3 तदा (for तथा). — b) M युद्धाय (for यत्तेषु). K1 कुरुनंदन (for भर°). D1 कुरुक्षेत्रे नरर्षभ (cf. 1b). — c) K2 °राजः; G1 °तेजाः; G3 °भागः (for °राज).

3 a) K3.4 B (except B2) Dn1 D5 D3.4.6.8.10 सर्वं मे (by transp.); D1 यद्वृत्तं. — b) K5 आचक्ष्व त्वमशेषतः; D5 आचक्ष्वानवशेषतः; D3.4 G3 आचक्ष्व च (G3 स-) विशेषतः; D7 कथय त्वं यथातथं; M2 आचक्ष्वाम विशेषतः. Ca cites अनवशेषतः (as in text). — c) D3.7 यद्वृत्तं (for यद्वृत्तं).

4 a) =(var.)5. 154. 24c; 193. 52c. — b) K1.2.5 B2 D3.7 पौरुषं च (D7 तु) निरर्थकं. — c) K3.4 B Dn1 D5 D1.3.4.6.8.10 युध्य° (for जान°). — d) K1.2 D2-4 T1 G2.5 युद्धे दोषान्. B5 क्षयावहान्.

5 a) K1.2 च; B2 हि (for [अ]पि). — b) D2 G3 °देविनं; D7 G2 °देविनं; T2 °जीविनं. — c) K1.5 D1.7.8 तं; K2 तत्; D3.4 यत् (for वा). D10 न शक्तो विनियंतुं वा. — d) D3.4 वक्तुं (for कर्तुं). T1 त्यक्तुं वापि महामनाः.

6 ab) S transp. सूत and बुद्धिः. K1 Da2 D5 °दर्शनी. — c) K5 D5 °गम्य (for °साद्य). — d) K (except K4) B2 D1.7.8 वि- (for सा).

7 a) D3.4 च (for वै). D3 कुलपांडवयोः. — b) D3.4 भविष्यति च संजय; D7 तद्भविष्यत्यसंशयं; D2 भविष्यति न संशयः. — G3 om. 7e-8f. — c) T G1.2 खलु (for किल). — d) K4.5 B Dn1 D5 D3.4.6.8.10 T G1.2 हि (for ऽभि-).

8 G3 om. 8 (cf. v.l. 7). — b) K3.4 B3 Dn1 D5 D6.10 कर्मेच्छसि; D3 यथा तथा. — T2 G2.3 transp. 8cd and 8ef. — c) T1 हि (for तु). — d) K4 B (except

न तु दुर्योधने दोषमिममासक्तुमर्हसि ।
शृणुष्वानवशेषेण वदतो मम पार्थिव ॥ ८
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा न स दैवं वा कालं वा गन्तुमर्हति ॥ ९
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥ १०
निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूताः सहामात्यैर्निकृतैरधिदेवने ॥ ११
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः ॥ १२
स्थिरो भूत्वा महाराज सर्वलोकक्षयोदयम् ।
यथाभूतं महायुद्धे श्रुत्वा मा विमना भव ॥ १३
न ह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् ॥ १४
केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ।
पूर्वकर्मभिरप्यन्ये त्रैधमेतद्वि[illegible]ष्यते ॥ १५

C. 5. 5406
B. 5. 159. 15
K. 5. 159. 15

इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

॥ समाप्तं भीष्माभिषेचनपर्व ॥

B5) Dn1 Ds D3.4.6.8.10 M1 (*inf. lin.*) आधातुम् (for आसक्तुम्). — e) K5 B2 तु विशेषेण; Cd अनवशे[illegible] (as in text). — f) S (G6 om.) वदतः (G3 परतः) पार्थिवर्षभ.

9 a) K5 D3.4 G3 यदा°; B3 यश्चा°; D10 यथा° (for य आ°). — b) D1 transp. अशुभं and प्राप्नुयात्. — c) K1–3 D1 G5 देवान्वा; D2 देव त्वां (for दैवं वा). K4 B Dn1 Ds D3.4.6.8.10 Cnp न स कालं न वा दैवं (Cnp देवं); T2 (before corr.) G2 येन सेना स दैवं वा. Cn cites न कालं वा देवान्. — d) D7 क्षेप्तुं; Ca.d.s गन्तुं (as in text). K4 B Dn1 Ds D3.4.6.8.10 Cnp वक्तु(B2 मुक्त; Ds शक्य)मेतद[illegible]. K2 (marg.) reads 9cd as in K4 also.

10 b) D3.4 निंद्यया यः समाचरेत्. — G3 om. (?hapl.) 10cd. — c) T1 G1 वाच्यः (for वध्यः).

11 a) Ds निकारः; Ca.d as in text. D2 °व्याघ्र (for °श्रेष्ठ). — b) D1 G3 त्वत्परीक्षया; Ca.d त्वत्प्रतीक्षया (as in text). — c) S महाराज (for सहामात्यैः). — d) K1–3 B1.2.4 D1.10 अपि देवने; K5 परिवेदने; D3.4 अथ देवने; S सह (G2 सर्वे; M1.2 च स-) दैवतैः (for अधिदेवने).

12 b) D1 T1 G2.3 om. च. — cd) D1 transp. वैशसं and यत्तन्मे. G1 तस्मिंस्तु; Ca.d.s वैशसं (as in text). G5 यत्त्वं मे (for यत्तन्मे). T2 G1.2.3 (by corr.) M सर्वतः (for °शः). K5 यन्मे शृणु च सर्वशः (for d).

13 a) K3.4 B3–5 Dn1 Ds D3.4.6.8.10 G3 M3–5 °प्रा(B4 Ds1 °प्र)ज्ञ (for °राज). — c) B2 महाभूतं; T2 G2.3 तथाभूतं. D3.4.7 महायुद्धं; M1.2 महद्युद्धं; M3.5 महद्युद्धे. — d) K4 B (except B2) Dn1 Ds D3.4.6.8.10 चै(Ds वै)कमना (for मा विमना).

15 a) K1.2.5 B (except B5) D1.2 M °निर्दिष्टं. — d) K1.2 G1.5 त्रयमेतद्; K5 D1 G3 त्रै(G3 त्रयी)धर्मे तद्; Ds तेषामेतद्. Ca cites त्रैधं (as in text). K1 m विभिद्यते; K3 विकृष्यति; K4 Dn1 Ds D6.7.10 प्रदृश्यते; B विदृश्यते; D3.4 हि दृश्यते; S विभाव्यते (T2 G1.2 °भज्यते); Ca.d as in text. — After 15, K (except K4) B2 Dn1 Ds ins.:

555* [illegible]: स्थिरो भूत्वा निशामय ।
[ K1.2.5 आसन्नं (for आपन्नः). ]

Colophon. Dn2 D5.9 G4 missing. — *Sub-parvan:* K4 B1.3–5 Dn1 Ds D2.6.8.10 अभिनिर्यात्रा (followed by समाप्ता); B2 T1 G2.5 अभिनिर्याणयात्रा (to it B2 adds समाप्ता). — *Adhy. name:* D1 संजयवाक्यं; T1 वृत्तान्तकथनाय धृतराष्ट्रेण संजयसंधानं; G3 धृतराष्ट्रसंजयवाक्यं; G5 M धृतराष्ट्रसंजयसंवादः. — *Adhy. no.* (figures, words or both): D6 49 (=149); T1 G1.2.5 160; T2 M 159 (M4 158); G3 157. — *S'loka no.:* K5 Dn1 16.

# १५७

C. 5. 5407
Ś. 5. 160. 1
K. 5. 160. 1

संजय उवाच ।
हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु ।
दुर्योधनो महाराज कर्णेन सह भारत ॥ १
सौबलेन च राजेन्द्र तथा दुःशासनेन च ।
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् ॥ २
उलूक गच्छ कैतव्य पाण्डवान्सहसोमकान् ।
गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः ॥ ३
इदं तत्समनुप्राप्तं वर्षपूगाभिचिन्तितम् ।
पाण्डवानां कुरूणां च युद्धं लोकभयंकरम् ॥ ४
यदेतत्कत्थनावाक्यं संजयो महदब्रवीत् ।
मध्ये कुरूणां कौन्तेय तस्य कालोऽयमागतः ।
यथा वः संप्रतिज्ञातं तत्सर्वं क्रियतामिति ॥ ५
अमर्षं राज्यहरणं वनवासं च पाण्डव ।
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ६
यदर्थं क्षत्रिया सूते गर्भं तदिदमागतम् ।
बलं वीर्यं च शौर्यं च परं चाप्यस्त्रलाघवम् ।
पौरुषं दर्शयन्युद्धे कोपस्य कुरु निष्कृतिम् ॥ ७
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च ।
न स्फुटेद्धृदयं कस्य ऐश्वर्याद्भ्रंशितस्य च ॥ ८
कुले जातस्य शूरस्य परवित्तेषु गृध्यतः ।

## 157

☞ This adhy. is missing in Dn2 (cf. v.l. 5. 143. 2); the MS. is mostly ignored here.

1 $^{a}$) K1 D5 हिरण्मत्यां; D7 हिरण्यायां; T2 G2 हिरण्यत्वां. G5 प्रविष्टेषु. — $^{b}$) D3.4 तेषु राजन् (for पाण्ड°). — After 1$^{ab}$, K3 (om. lines 2–6).4 B Dn1 D5 D1.3.4.6–8.10 ins.:

556* न्यविशन्त महाराज कौरवेया यथाविधि ।
तत्र दुर्योधनो राजा निवेश्य बलमोजसा ।
संमानयित्वा नृपतीन्न्यस्य गुल्मांस्तथैव च ।
आरक्षस्य विधिं कृत्वा योधानां तत्र भारत ।
कर्णं दुःशासनं चैव शकुनिं चापि सौबलम् । [5]
आनाय्य नृपतिस्तत्र मन्त्रयामास भारत ।

[ (L. 4) D1 आरण्यक- (for आरक्षस्य). B3 D5 चैव (for तत्र). — (L. 5) B3.5 D5 D1 सौबलं तथा (for चापि सौबलम्). — (L. 6) K4 B3 D1.6–8 नृपतींस्तत्र (for नृपतिस्तत्र).]

— K3 om. 1$^{cd}$. — $^{c}$) D3.4 T2 G2 °राजः; M1.2 °तेजाः (for °राज). K4 B Dn1 D5 D6.8.10 तत्र (B ततो) दुर्योधनो राजा. — $^{d}$) G3 कर्णेन समभाषत. — After 1, K4 B Dn1 D5 D6.8.10 ins.:

557* संभाषित्वा च कर्णेन भ्रात्रा दुःशासनेन च ।
[ Posterior half = (var.) 2$^{b}$. ]

2 $^{b}$) K4 B Dn1 D5 D6.8.10 संश्रयि(K4 °श्रापि)त्वा नरर्षभ. — $^{d}$) B2 D7 वाक्यम्; D2–4 चेदम् (for इदम्).

3 $^{a}$) D3.4 T2 G3 कौरव्य; Ca कैतव्य (as in text).

4 $^{a}$) T G1.2.3 तु (for तत्). — $^{b}$) G2.3 °पूगात्तु°. — 4$^{c}$ = 1. 1. 11$^{c}$. — $^{cd}$) B3 पांडवानां महायुद्धं सर्वलोक°.

5 $^{a}$) S कथ्यते (G3 कथितं); Ca.3 कत्थना- (as in text). — $^{b}$) B2 मे तद्; D10 मम च; T1 G4 मा यद्; T2 G1.2.5 मां यद्; G3 वाक्यं) (for महद्). — After 5$^{ab}$, K4 B Dn1 D5 D1.3.4.6–8.10 ins.:

558* वासुदेवसहायस्य गर्जतः सानुजस्य ते ।
[ B1.2.4 D1.3.4.10 च (for ते). ]

— $^{d}$) = 5. 88. 74$^{d}$; 135. 9$^{d}$. D10 कालः समा°. — $^{e}$) K3 यथा यत्; K5 Dn1 यथा च; B1–3 D1.3.4 T2 G2.3 यथावत् (for यथा वः). — $^{f}$) K3 D1.2.7 तथा तत्; K5 तत्तथा (for तत्सर्वं). — After 5, K4 B Dn1 D5 D1.3.4.6–8.10 ins. a passage given in App. I (No. 9), followed by stanza 16 of this adhy.

6 = (var.) 13 = 5. 158. 9. K3–5 B Dn1 D5 D1.3.4.6–8.10 read 6–11 after 12, which latter in these MSS. follows passage No. 10 of App. I. — $^{a}$) D1 सहर्षं (for अमर्षं). K4 B Dn1 D5 D6.10 राज्ञाभिषो-सनक्लेशं. — K4 D6 om. (hapl.) 6$^{bc}$. — $^{c}$) B Dn1 D5 D10 कृष्णाया° (for द्रौपद्या°).

7 $^{a}$) = 5. 88. 74$^{c}$; 135. 9$^{c}$. — $^{b}$) K3.4 B Dn1 D5 D6.8.10 सर्वं (for गर्भं). — $^{d}$) K3 वा (for च). D3.4 अस्त्राणां लाघवं परं; S परमं चास्त्रलाघवं. — D8 *repeats* (with v.l.) 7$^{a}$–10$^{b}$ after 5. 158. 9.

8 D3 om. (hapl.) 8$^{b}$–9$^{a}$; D6 om. (hapl.) 8$^{cd}$. — $^{c}$) K1.2 B1.4 D1.2.7 हृदयं कस्य न स्फोटेत्; K3–5 B3.2.5 Dn1 D5 D3.4.10 हृदयं न [illegible].

9 D3 om. 9$^{a}$ (cf. v.l. 8). — $^{a}$) D3.4 शूरस्य च

आच्छि... कोपं कस्य न दीपयेत् ॥ ९
यत्तदुक्तं म... वाक्यं कर्मणा तद्विभाव्यताम् ।
अकर्मणा कत्थितेन सन्तः कुपुरुषं विदुः ॥ १०
अ...त्राणां वशे स्थानं राज्यस्य च पुनर्भवः ।
द्वावर्थौ युध्यमान... तस्मा... पौरुषम् ॥ ११
अ...न्वा त्वं पराजित्य प्रशाधि पृथिवीमिमा... ।
अथ वा निहतोऽस्माभिर्वीरलोकं गमिष्यसि ॥ १२
रा...प्रव्राजनं क्लेशं वनवासं च पाण्डव ।
...आयाश्च ... संस्मरन्... भव ॥ १३
अप्रियाणां च वचने प्रव्रज... पुनः पुनः ।
अमर्षं दर्शयाद्य त्वममर्षो ह्येव पौरुषम् ॥ १४
क्रोधो बलं तथा वीर्यं ...नयोगोऽस्त्रलाघव... ।
इह ते पार्थ दृश्यन्तां संग्रामे पुरुषो भव ॥ १५
तं च तूबरकं मूढं बह्वाशिनमविद्यक... ।
उलूक मद्वचो ब्रूया असकृद्भीमसेनक... ॥ १६
अ...केनैव यच्छप्तं सभामध्ये वृकोदर ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ १७
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दम... ।
पुष्टास्तेऽश्वा भृता योधाः श्वो युध्यस्व सकेशवः ॥ १८ C. 5. 5500 B. 5. 160. 93 K. 5. 160. 9?

इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

कृताकस्य. — $^b$) K5 परविसस्य; D1 परिवर्तेषु; D3.4 परव्रज्येषु. K3.4 B Dn1 D5 [अ]गृध्यतः; G1 गृध्नतः; G3 [अ]गृध्नुतः (for गृध्यतः). — $^c$) K1 आछिदन्; K3 B1.3.4 D6 आक्षिप्तं (for आच्छिन्नं). D3.4 आच्छिन्नविसस्याक्रम्य. — $^d$) T1 G5 कोपः (for कोपं).

10 $^a$) D3.4 यदुक्तं तत् (by transp.); S यदुच्यते. K4 महावाक्यं; D1 महद्वाक्यं. — $^b$) D10 तद्विधीयतां; M2 तद्वि भाव्यतां; M3-5 तद्वि भाव्यतां. — $^c$) K1.3 नतं वंशे; G5 कत्थनेन (for कत्थितेन). — $^d$) D3.4 G5 M1.2 का (for कु).

11 $^b$) B5 D3 G3 (catalectic!) राज्यं (for राज्यस्य). T2 G2 पुनर्जयः (for °र्भवः). B1-4 Dn1 D5 D3.4.6.8.10 राज्यं च पुनरुद्धर. — $^c$) K4 B (except B5) Dn1 D5 D6.10 ...कामस्य. — $^d$) K5 D3 त्वं कुरु; B (except B5) D5 D6 तत्कुरु (for कुरुत). — Stanzas 5. 158. 7-8 (with v.l.) are read (for the first time) in B Dn1 D5 D6-8.10 after 11, in K4.5 (latter om. the *second* stanza) after 12; in both places there is a *repetition* in the proper place.

12 K3-5 B Dn1 D5 D1.3.4.6-8.10 read 12 before stanzas 6-11 and after a passage given in App. I (No. 10), which latter follows our stanza 17 (q. v.). — $^a$) B3 त्वं तु; M3-5 पार्थ (for वा त्वं). D3.4 अस्मान्वा विनि त्वाजा. — $^b$) B3 वसुधाम् (for पृथिवीम्). — $^c$) K3-5 B Dn1 D5 D1.6-8.10 T1 निर्जितो (for निहतो). — $^d$) K1.3 वीरलोकान्; T1 G3.5 M देवलोकं. K3-5 B Dn1 D5 D1.6-8.10 स्मे वीर शयिष्यसि. — After 12, K4 reads 5. 158. 7-8 (with v.l.), while K5 reads only 5. 158. 7. On the other hand, after 12, D3.4 ins. 5. 158. 12 and 13 with 560* between them (cf. v.l. 18).

13 =(var.) 6. — $^a$) K4 B Dn1 D5 D6.8.10 निर्वासन- (K4 D5 °नं); D1 T2 G2 प्रव्रजनं; D3.4 प्रव्राजनात्; T1 प्रव्राजन- (for प्रव्राजनं). G3 चैव (for क्लेशं). — $^b$) K1.2.5 D1-4.7 फाल्गुन (for पाण्डव). — $^d$) K5 D1 संस्मृत्य (for संस्मरन्).

14 T2 om. 14-15. — $^a$) S तु (for च). K3.4 B Dn1 D5 D1.3.4.6.8.10 वचनं. — $^b$) K1.3 प्रव्रजन्स; K3 B Dn1 D5 D1.3.4.6.10 प्रव्रुवत्सु; K4 D5 प्रव्रुवंश्च. — $^c$) B (except B3) Dn1 D5 D6.10 दर्शयस्व (for °याद्य). — $^d$) G3 अमर्षेष्वेव पौरुषं.

15 T2 om. 15 (cf. v.l. 14). — $^a$) D1.3 M3-5 क्रोधं. K (except K4) शौर्यं (for वीर्यं). — $^b$) K1.5 D1.7 परं चास्त्र(K5 °स्त्र)लाघवं. — $^c$) B3 इहैव (for इह ते). K1.3 पार्थ दृश्यंते; K4 B Dn1 D5 D6.8.10 दृश्यतां पार्थ. — $^d$) K4 B Dn1 D5 D3.4.6.8.10 युध्यस्व (for संग्रामे).

16 K3 om. 16$^{ab}$. K4 B Dn1 D5 D6-8.10 read 16 and 17 (with 559*) after a passage given in App. I (No. 9); cf. v.l. 5. — $^a$) K1.3 तत्र (for तं च). G1 नश्वरकं; G2 [अ]मर्षतरं; G3 रूपकरं; Ca.d तूबरकं (as in text). K5 B Dn1 D5 D6-8.10 Ca बालं (for मूढं). K4 तं बहुबरकं बालं. — $^b$) K1 G3 M3 बह्वाशनम्. K1(*sup. lin.* as in text).3 अधुतमं; Ca अविद्यकं (as in text). — $^c$) K1.3 D3-4 T2 G1.2.5 M ब्रूया (as in text); the rest ब्रूहि. — $^d$) K1 G1.5

# १५८

C. 5. 5395
B. 5. 161. 1
K. 5. 161. 1

संजय उवाच ।

सेनानिवेशं संप्राप्य कैतव्यः पाण्डवस्य ह ।
समागतः पाण्डवेयैर्युधिष्ठिरमभाषत ॥ १
अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम ।
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि ॥ २

युधिष्ठिर उवाच ।

उलूक न भयं तेऽस्ति ब्रूहि त्वं विगतज्वरः ।
यन्मतं धार्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः ॥ ३

संजय उवाच ।

ततो द्युतिमतां मध्ये पाण्डवानां महात्मनाम् ।
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ॥ ४
द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ॥ ५
इदं त्वामब्रवीद्राजा धार्तराष्ट्रो महामनाः ।

---

ह्यसकृत् (for असकृत्). — After 16, $K_{8.4}$ B $Dn_1$ $D_8$ $D_{1-4.6-8.10}$ ins.:

559* विराटनगरे पार्थ यस्त्वं सूदो ह्यभूः पुरा ।
बल्लवो नाम विख्यातस्तन्ममैव हि पौरुषम् ।

17 =var. 5. 158. 10. — $K_8$ om. 17; $D_7$ om. $17^{ab}$. — $^{ab}$) $D_{8.4}$ च (for [ए]व), and ख्यातं (for ज्ञातं). Ca.d cite शप्तं (as in text). $K_4$ B $Dn_1$ $D_8$ $D_{1.6.8.10}$ प्रतिज्ञातं सभामध्ये ($D_1$ om. $14^{bcd}$) न तन्मिथ्या त्वया पुरा. — After 17, $K_4$ B $Dn_1$ $D_8$ $D_1$(om. lines 1–6)$_{.8.4.6-8.10}$ ins. a passage given in App. I (No. 10).

18 =(var.)5. 158. 11. — $^{a}$) $K_8$ B (except $B_8$) $D_8$ $D_{6.10}$ Cs लोहाभिसारः; $K_8$ लोहाभिभारः; S बलाभिहारः ($T_1$ °सारः; $G_8$ °हासः); Ca.d as in text. — $^{b}$) S °क्षेत्रे अ(T $G_{1-8}$ ह्य)कर्दमे; Ca as in text. Cd cites अकर्दमम् (as in text). — $^{c}$) $D_{8.4}$ च (for ते). $K_{1.8}$ M (except $M_1$) सुभूता; $D_8$ स्वधृता (for ऽथा भूता). $M_{2.4.5}$ यौधाः. — $^{d}$) $M_{8-5}$ वृकोदर (for सकेशवः). $D_{8.4}$ युध्यस्व सहकेशवः. — After 18, $K_4$ B $Dn_1$ $D_8$ $D_{6.8.10}$ read (for the first time) 5. 158. 12–41 (with 560* and 562* respectively after stanzas 12 and 39), *repeating* the stanzas in their proper place; the passage is given verbatim in App. I (No. 11).

☞ The sequence of the stanzas of this adhy. in the Vulgate (and the older printed ed.), which is extremely confused, is as follows: $1^{ab}$, 556*, $1^{cd}$, 557*, $2^{cd}$–$5^{ab}$, 558*, $5^{cdef}$; then follows passage No. 9 of App. I (108 lines); then stanza 16, 559*, and stanza 17; then passage No. 10 of the same App. (lines 28); then stanzas 12, 6–11; then 5. 158. 7–8; then stanzas 13–15, 18; and finally there is an anticipation—which is as inexplicable as it is unnecessary—of stanzas 12–41 of the foll. adhy. Consequently this short adhy. of 18 stanzas appears in the printed ed. as an adhy. of 125 stanzas!

Colophon om. in $T_2$ $G_{2.5}$ $M_{1.2}$. $Dn_2$ $D_{5.9}$ $G_4$ missing. — *Sub-parvan:* N ($Dn_2$ $D_{5.9}$ missing) उलूक($B_8$ अन्धक)यान; $G_8$ उलूकदूतागमन. — *Adhy. name:* $T_1$ उलूकप्रेषणे वाक्यवचनं; $M_{8-5}$ उलूकप्रेषणं. — *Adhy. no.* (figures, words or both): $D_6$ 150; $T_1$ $G_1$ 161; $G_3$ 158; $M_{8.5}$ 160; $M_4$ 159. — *S'loka no.:* $K_8$ 19; $Dn_1$ 15 (=115).

## 158

☞ This adhy. is missing in $Dn_2$ (cf. v.l. 5. 143. 2); the MS. is mostly ignored here.

1 $^{a}$) $K_4$ B $Dn_1$ $D_8$ $D_{8.4.6.8.10}$ संप्राप्तः (for °प्राप्य). $D_1$ $T_2$ $G_2$ सेनानिवेशनं प्राप्य. — $^{b}$) $B_8$ पांडवैः सह; T G पार्थिवैः सह (for पाण्डवस्य ह). $K_{1-8}$ सः; $D_8$ च; $D_8$ हि (for ह). — $^{c}$) $D_2$ $G_2$ समागतं (for °गतः).

2 $G_8$ om. 2–4. — $^{b}$) S ($G_8$ om.) वदतो (for ब्रुवतो).

4 $G_8$ om. 4 (cf. v.l. 2). $K_4$ $B_{1-4}$ $Dn_1$ $D_8$ $D_{2-4.6.10}$ om. the ref. $B_8$ $D_7$ वैशंपायनः (for संजयः). — $^{c}$) $K_4$ B $Dn_1$ $D_8$ $D_{6.8.10}$ मत्स्यानां (for सर्वेषां). — $^{d}$) $D_1$ $T_2$ $G_2$ महात्मनः (for यश°).

5 $^{d}$) $M_{8-5}$ उवाच (for जगाद).

6 Before 6, all MSS. ($Dn_2$ missing; $T_2$ $G_2$ om.) ins. उलूक उ° (resp. उलूकः). — $T_2$ $G_2$ om. $6^{a}$–$8^{b}$. — $^{a}$) $T_1$ राजन् (for राजा). — $^{b}$) $K_{1.8}$ $T_2$ $G_{2.8}$ °बकः

शृण्वतां [illegible]त्वाराणां तन्निबोध नराधिप ॥ ६
पराजितोऽसि द्यूतेन कृष्णा चाना[illegible]ता सभाम् ।
शक्योऽमर्षो म[illegible]ष्येण कर्तुं [illegible]रुषमानिना ॥ ७
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासिताः ।
संवत्सरं [illegible]राटस्य दास्यमास्थाय चोषिताः ॥ ८
अमर्षं राज्य[illegible]रणं वनवासं च पाण्डव ।
द्रौपद्याश्च परि[illegible]शं संस्मरन्पुरुषो भव ॥ ९
अशक्तेन च यच्छप्तं भीम[illegible]नेन पाण्डव ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ १०
लोहाभिहारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
समः पन्था भृता योधाः श्वो युध्यस्व सकेशवः ॥ ११

असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादन[illegible] ॥ १२
द्रोणं च युध्यतां श्रेष्ठं [illegible] युधि ।
अजित्वा संयुगे पार्थ राज्यं कथमि[illegible]च्छसि ॥ १३
ब्राह्मे धनुषि चाचार्यं वेद[illegible] द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकधरमच्युत[illegible] ॥ १४
द्रोणं मोहाद्युधा पार्थ यज्जिगीष[illegible] तन्मृषा ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ १५
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्मही[illegible] ।
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् ॥ १६
को ह्याभ्यां जीविताका[illegible]ी प्राप्यास्त्रमरिमर्दन[illegible] । C. 5. 5552 B. 5. 161. 18 K. 5. 161. 18

(for °मना:). — d) K3.5 D1–4.7 G1 जनाधिप; Dn1 युधिष्ठिर (for नराधिप).

7 T2 G2 om. 7 (cf. v.l. 6). — b) K1 D1 T1 G1.3 M3–5 चानयिता; G3 चावमता. — c) K1.2 शक्यो गर्वो; M3–5 शक्योम्मर्षो (for शक्योऽमर्षो).

8 T2 G2 om. 8ab (cf. v.l. 6). — a) K1.2.5 D6 एतानि; B2 D2–4.7 G5 M एव च; T1 G1 एव हि; G3 इमानि (for एव तु). — b) K1.2.3m.5 D6 राष्ट्रात्; K3 राज्यात्; Cd.s धिष्ण्यात् (as in text). B4.5 D3 G3.5 विवासितः; Ds2 D7 निवासिताः. — d) D3.4 गृहम् (for दास्यम्). K4 B4.5 G5 चोषितः.

9 = 5. 157. 6; = (var.) 5. 157. 13. — a) D3 भर्त्सनं (for अमर्षं). — b) T G2.3.5 भारत (for पाण्डव). — After 9, D3 repeats 5. 157. 7a–10b [ v.l. यदिदं (for यदर्थं); यं च न (for परं च); हृदयं कस्य न स्फोटेत् (for न स्फुटेद्धृदयं कस्य); विधीयतां (for विभाव्यताम्). ]

10 = (var.) 5. 157. 17. — a) T2 G1.2 [ए]व (for च). — D3 om. 10c–11d.

11 = (var.) 5. 157. 18. D3 om. 11 (cf. v.l. 10). — a) K3 लोहाभिभारः; B4 D3.4.10 Cs लोहाभिसारः; S बलाभिहारः. — b) T1 G1.3 M2 °क्षेत्रे ह्यकर्दमे. — c) K4 B (except B2) Dn1 भृतास्तेभ्याः; Ds2 D3.4.10 वृता योधाः; D6 वृतास्तैर्थैः (for भृता योधाः). K3 पृष्ठश्चोपहृता योधाः; S पुष्टास्तेभ्या (T2 G2 °स्ते ये) भृता (G5 भूत-; M3 भृत-) यो(M2–5 यौ)धाः.

☞ K4 B Dn1 Ds D6.8.10 read stanzas 12–41, (with v.l., and with ins.) for the first time after stanza 18 of the previous adhy., repeating them here (cf. App. I, No. 11).

12 B5 om. 12. — c) M3–5 आरुरुक्षन्. — After 12, K4 B (except B5) Dn1 Ds D3.4.6–8.10 ins.:

560* एवं कत्थसि कौन्तेय अकत्थन्कुरु पौरुषम् ।
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ।

[ (L. 1) K4 Ds D3.4.7.10 स कत्थन् (for अक°). Dn1 D3 पुरुषो भव (for कुरु पौरुषम्). — (L. 2) D3.4.6 त्र (for सु-). ]

13 a) Dn1 बलिनां (for युध्यतां). — c) B1.2.4 अयुद्ध्वा (for अजित्वा). — D6 om. (hapl.) 13d–15a. — d) M3–5 त्वं किम् (for कथम्).

14 D6 om. 14 (cf. v.l. 13). — b) K2 B Dn1 Ds D1–4.7.10 Cs अंतरं; K3.5 चांतरं; K4 त्वंतरं; Cd अंतरं (as in text). T2 G2.5 M तयोः (for द्वयोः). T1 G1.3 वेद योरभ्यंतरं तयोः; M1 (inf. lin.) वेदवेदांतयोरपि. — B5 om. 14cd. — c) K (except K4) B3.4 Ds D1.2.7.8.10 असंक्षोभ्यम् (for अविक्षोभ्यम्). B2 D3.4 M1 युधि धुर्यमिवा(B2 °समं)क्षोभ्यं; G1 युधि युध्यंतमक्षोभ्यं. — d) K4 B (B5 om.) D10 °चरम्; K5 Dn1 Ds D3.4.7 °वरम्; G3 °रथम् (for °धरम्).

15 D6 om. 15a (cf. v.l. 13). — a) K4 B Dn1 Ds D3.4.10 महाद्युतिं; S (except T1) मोहाद्यथा (G2 M3–5 °दा) (for मोहाद्युधा). — b) B1.2 Dn1 D1 जेतुमिच्छसि; B4 D2 यज्जिहीर्षसि; T1 G5 संजिगीषसि; T2 G1–3 M संजिहीर्ष(G3 °जहिष्य)सि.

16 a) S [ऽ]पि (for वा). K1.2 दहेत्; B2 D7 हरेत् (for वहेत्). — b) T2 G2 वि- (for [अ]पि). D7 भुवि (m मही as in text).

17 a) K5 स्वाभ्यां; Dn1 D1 ह्यस्मि (for ह्याभ्यां). — b) B5 Dn1 प्राप्येमम्; Cs° प्राप्यांतं (for प्राप्यास्त्र-).

C. 5. 5552 B. 5. 161. 18 K. 5. 161. 18 गजो वाजी नरो वापि पुनः स्वस्ति गृहान्व्रज ॥ १७
कथं भीष्मादभिध्यातः संसृष्टो वा रणेन वा ।
रणे जीवन्विमुच्येत पदा भूमिमुपस्पृशन् ॥ १८
किं दर्दुरः कूपशया यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ १९
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्बोजशकैः खशैश्च ।
शाल्वैः समत्स्यैः कुरुमध्यदेशै-
र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ २०
नानाजनौघं युधि संप्रवृद्धं
गाङ्गं यथा वेगमवारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ॥ २१
इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् ।
अभ्यावृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत ॥ २२
अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् ॥ २३
यदीदं कत्थनात्सिध्येत्कर्म लोके धनंजय ।
सर्वे भवेयुः सिद्धार्था बहु कत्थेत दुर्गतः ॥ २४
जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्यहं त्वादृशो नास्ति योद्धा
राज्यं च ते जानमानो हरामि ॥ २५
न तु पर्यायधर्मेण सिद्धिं प्राप्नोति भूयसीम् ।

— [a]) M3–4 वापि (for वाजी). K4 B (for B3 see below) Dn1 D5.8.10 रथो (for नरो). B3 G3 गजवाजि यो (G3 °नरो) वापि. — [d]) S स्वस्त्यो (for स्वस्ति). T1 G2 गृहं (for गृहान्). K B2 D3 D1–4.6–8.10 व्रजात् (for व्रजेत्).

18 [a]) D1 अनु°; S अवध्यातः (M1 अवज्ञातः; M3.4 अपध्यातः); Cd.s as in text. — [b]) K3 D7 T1 संस्पृष्टो; Dn1 °दृष्टो; D5 G3 °पृष्टो (for °सृष्टो). K4 D3.4.6.10 च (for वा). — [d]) = 4. 15. 15[b].

19 K3 om. 19[c]–21[a]. — [ab]) K1–3 Ds2 D7.8 दुर्दु(K3 Ds2 °र्दु)रः; Cd दर्दुरः (as in text). M3–5 किं दर्दुरः कूपशयो यथेमां नावबुध्यसे (Anuṣṭubh!). — B3 om. from. 19[cd] up to 5. 159. 1. — [c]) M3–5 चमूमेतां (for दुराधर्षां). — [d]) T2 G3 अवध्यां (for इव द्याम्).

20 K3 B3 om. 20 (cf. v.l. 19). — [b]) T1 कांमोज- (for काम्बोज-). For खशैश्च, some MSS. read खसैश्च or खषैश्च; only K3 किरातैः. — [c]) S (mostly) साल्वैः. K3 [illegible]मत्स्यदक्षयः; K4 B1.2 Ds1 D2–4.6.10 °मध्यदेश्यैः; B4 D1 °[illegible]ध्यदेश्यः; Dn1 D5 °मुख्यदेशैः; G3 कुरुमध्यदेश्यैः. — [d]) K1.2 द्रविडा(K2 °डौ)न्ध्रकैश्च; K3 D1 द्रविडांध्रकैश्च; K4 D3 [illegible]विडा(D3 °ड)कांभ्रैः; B2 D3.4.8 [illegible]विडोड्रकाचैः (B2 °काम्यैः; D6 °कांचैः); Dn1 द्रविडैर्ध्रकांचैः; D5 D10 द्रविडोड्रकांच्यैः; D2 द्रविडांध्रकाचैः; D7 [illegible]विडांध्रकांचैः; T1 द्रमिडां[illegible]; T2 G1.2.5 द्रमिळांध्रकैश्च; G3 द्रमिडांध्रकैश्च; M द्रमिळांध्र(M3 °च)काचैः.

21 K3 om. 21[a]; B3 om. 21 (cf. v.l. 19). — [a]) K1–3 D2.7 संनिविष्टं; K4 B2 D3.4.6.8.10 T G1.2 M °प्रवृत्तं; G3 °प्रमत्तं (for °प्रवृद्धं). — [b]) N (B3 om; Dn2 missing) M3 अपारणीयं. — [c]) G3 तच् (for मां). K (except K4) B2 D3 D1–4.7 °कुल°; S (except G1.5) °पुर° (for °बल°). Cd cites नागकुलं. — [d]) S विकत्थसे (for युयु°). K (except K4) D1.7.8 किल (for किम्). K1–3 G3 किमल्पबुद्धिः; G5 विकल्प[illegible]द्धे.

23 B3 om. 23 (cf. v.l. 19). — [b]) D3 न हि (for ऽर्जुन). — [c]) K1.3 D3 D1–4.7 M3–5 पर्यायसिद्धि (D3 °द्धेर्); K4 D7 पर्यायसिद्धि; T2 G1.2.5 यस्य वा (G1.5 वा) सिद्धिर्. T2 G1.2 एकस्य (for एतस्य). — [d]) K (except K4) D1 कत्थतः (for °नात्).

24 B3 om. 24 (cf. v.l. 19). — [a]) K3 D7.8 T1 G3.5 M (except M3) यद् (for यदि). D3.4.10 इह (for इदं). D3 कत्थतः (for कत्थनात्). K4 B (B3 om.) Dn1 D5 D6.8.9.10 लोके (for सिध्येत्). — [b]) K4 B (B3 om.) Dn1 D5 D6.8.10 सिध्येत्कर्म; D3.4 कर्म सिध्येद् (for कर्म लोके). — [d]) K4 B (B3 om.) Dn1 D5 D6–8.10 कत्थने को हि; D2–4 बहु कत्थेत. D2–4 दुर्गताः; D10 दुर्बलः (for दुर्गतः).

25 B3 om. 25 (cf. v.l. 19). — [c]) K1.2 योधः (for योद्धा). — [d]) K4 B1.2.4 Dn1 D5 D6.8.10 जानान(D5 जानीम)स्ते राज्यमेत[illegible]रामि; B2 जानन्नु ते राज्यमेतज्जहामि; D3.4 राज्यं तेजो न त्वमहो मतो मे.

26 B3 om. 26 (cf. v.l. 19); G3 om. 26[ab]. — [a]) D1 च (for तु). B2 °धर्मेण; D3 °मार्गेण; G3 °मार्गेण

मनसैव हि भूतानि धाता प्रकुरुते वशे ॥ २६
त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् ॥ २७
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणे जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फल्गुन ॥ २८
सगदाद्भीमसेनाच्च पार्थाच्चैव सगाण्डिवात् ।
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ॥ २९
सा वो दास्यं समापन्नान्मोक्षयामास भामिनी ।
अमानुष्यसमायुक्तान्दास्यकर्मण्यवस्थितान् ॥ ३०
अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ३१
सूदकर्माणि च श्रान्तं वैराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ ३२
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
श्रेण्यां कक्ष्यां च वेण्यां च संयुगे यः पलायते ॥ ३३
न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ॥ ३४
न माया हीन्द्रजालं वा कुहका वा विभीषणी । C. 5. 5570 B. 5. 161. 36 K. 5. 161. 36

(as in text). Cd cites पर्यायधर्मः. — b) Dn1 राज्यं (for सिद्धिं). K5 आप्नोति (for प्रा°). K1.3.5 D1.2 मानसीं; K2 D5 मानुषीं; K4 B1.3.4 Dn1 D8 D5.10 मानुषः; B2 D7 मानवः (for भूयसीम्). — c) K1 [इ]ह; T1 G3 च; M3–5 प्र- (for हि). K3 हि कूलानि; K4 B (B5 om.) Dn1 D8 D2.4.6.10 [अ]नुकूलानि (for हि भूतानि). — d) K4 B1.3.4 Dn1 D8 D5.8.10 C5 विधाता; B2 धाता च; (for धाता प्र-).

27 B5 om. 27 (cf. v.l. 19); G3 om. $27^{cd}$. — b) D1 M3–5 त्वा (for त्वां).

28 B5 om. 28 (cf. v.l. 19); D7 om. $28^{ab}$. — b) K5 D2 T G1.3.5 यदा (for यत्त्वं). K4 B (B5 om.) Dn1 D8 D5.10 दासपणैर्; T G1.3.5 दासः पणे (for दासपणे). — d) N (except D1.2; B5 om.; Dn2 missing) फाल्गुन (for फल्गुन).

29 B5 om. 29 (cf. v.l. 19). — a) B3.4 Dn1 D8 वा (for च). K5 सगदो भीमसेनश्च. — b) K4 D3.4.6.10 चापि; B3.4 Dn1 D8 वापि (for चैव). D5 फाल्गुनाद्वा (for पार्थाच्चैव). K5 पार्थश्चैव सगांडिवः. — c) K3 हि; K4 [ए]व; K5 D2–4.7 विः; S च (for वै). Dn2 सः; D6 G3 M3–5 वा; T2 G2 च (for वः).

30 B5 om. 30 (cf. v.l. 19). — a) K2 Dn1 D2–4.7 S दास्यं (as in text); the rest दास्ये. K5 सानुजाश्चैव संपन्नान्. — b) K4 B (B5 om.) D8 D6.8 भाविनी; Dn1 पार्षती (for भामिनी). — c) K2 B1.3 C5 अमानुष्ये; K3 B4 D6 °ष्यं (for °ष्य-). B4 D7 समापन्नान्; D2 M4 °युक्ताः (for समा...न्). — d) K4 B (B5 om.) Dn1 D8 D1.6.8 दास-; T G1.3.5 M1 दास्ये (for दास्य-).

31 B5 om. 31 (cf. v.l. 19). — b) K1–3 D1 सत्यम् (for तथ्यम्). D3.4 च (for तत्). — c) K5 धृता वेणी हि; T2 G3.5 धृत्वा हि वेणीं. — d) K1 D3.4 T G1 तथा; D5 यदा (for तदा).

32 B5 om. 32 (cf. v.l. 19). — a) K3.5 D1 विश्रांतः; D7 विश्रांतं; G3 चाश्रांतं. — c) K5 भीमसेनश्च; B3.4 Dn2 D2–4 °सेनस्य; D1 °सेनः स. — d) D5 M1.2 यत्तु; D1 T G M3–5 यत्तत् (for यच्च). D7 स्मृत्वा त्वं पुरुषो भव.

33 B5 om. 33 (cf. v.l. 19) — a) K4 B (B5 om.) Dn1 D8 D2–4.6.8.10 एतत्; Cd.8 एव (as in text). D7 एवं निपातितो दंडः. — b) D7 क्षत्रियस्य ततस्तव. — cd) K1 transp. कक्ष्यां and वेण्यां. K3 कर्ण; Dn1 कक्षां; Dn2 स्कध्यां; Cd कक्ष्यां (as in text). G3 वेणीं; Cd वेण्यां (as in text). M3–5 पलायति (for °ते). K4 B (B5 om.) Dn1 D2.4.8.8.10 वेणीं कृत्वा षंढवेषः कक्ष्यां (K4 D8.10 °क्ष्या) नर्तितवानसि; D7 सानुबंधस्य दुर्बुद्धे क्षत्रियेण सता मया. D3.4 *repeat* $33^{cd}$ as in text also.

34 B5 om. 34 (cf. v.l. 19). — b) N (except D1.2; B5 om.; Dn2 missing) फाल्गुन. — c) D3.4 S (except G3) न राज्यं (D3.4 राज्यं वः; M1.2 राज्यं न) प्रति- दास्यामि. — d) D7 [इ]ह स- (for सह-).

35 B5 om. 35 (cf. v.l. 19). — a) D2.7.8 G1.3.5 M1 मया; Cd.8 माया (as in text). K3 नेंद्र°; D2 तेंद्र°; G1 चेंद्र° (for हीन्द्र°). D3.4 न जानामींद्रजालं वा; G2 न मायेंद्रजालं वा; M3–5 न मया हींद्रजालानि. Cd.8 cite इंद्रजालं (as in text). — b) K2.3 D5 C5 कुहकं; D1.2 T G1.3.5 M1.2 कुहना; D3.4 छद्मकं; Cd कुहका (as in text). G3 कुहकानां (for कुहका वा). K5 D3.4 च (for वा). K1 B2 D6.7 विभीषणा; K2.3 विभीषणं; K5 [अ]विभीषिका; B1.3 [अ]पि भीषणी; B4 Dn1 D8 [अ]पि भीषणा; D1 विभीषणे; D3.4 [अ]तिभीषणं; D5 [अ]पि भीषणं; Cd विभीषणी (as in text). — c) T2 G2 युद्धं (for युधि). — d) K5 °गर्जितं; B5 T2 G1.2 °गर्जिताः;

C. 5. 5966 B. 5. 175. 11 K. 5. 176. 12 बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ॥ ९
भजस्व मां शाल्वपते भक्तां बालामनागसम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥ १०
साहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव तवैव गृहमागता ॥ ११
न स भीष्मो महाबाहुर्मामिच्छति विशां पते ।
भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया ॥ १२
भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ १३
यथा शाल्वपते नान्यं नरं ध्यामि कथंचन ।
त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे ॥ १४
न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि शाल्वैतत्सत्येनात्मानमालभे ॥ १५
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ १६
तामेवं भाषमाणां तु शाल्वः काशिपतेः सुताम् ।
अत्यजद्भरतश्रेष्ठ त्वचं जीर्णामिवोरगः ॥ १७
एवं बहुविधैर्वाक्यैर्याच्यमानस्तथानघ ।
नाश्रद्दधच्छाल्वपतिः कन्याया भरतर्षभ ॥ १८
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साश्रुनयना बाष्पविह्वलया गिरा ॥ १९
त्वया त्यक्ता गमिष्यामि यत्र यत्र विशां पते ।
तत्र मे सन्तु गतयः सन्तः सत्यं यथाब्रुवम् ॥ २०
एवं संभाषमाणां तु नृशंसः शाल्वराट् तदा ।
पर्यत्यजत कौरव्य करुणं परिदेवतीम् ॥ २१
गच्छ गच्छेति तां शाल्वः पुनः पुनरभाषत ।
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ २२
एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना ।
निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

---

रुदती and विद्राव्य.

10 a) $K_3$ $D_1$ S साल्व°. — b) S अथवागसीं. — d) $B_8$ न धर्मो वै; $D_{6.8}$ न धर्मेषु. $T_2$ $G_3$ प्रगण्यते.

11 a) $D_7$ समामंत्र्य च गांगेयं. — c) $D_{3.4}$ [अ]स्मि (for च). $K_3$ $D_7$ अस्मि (for एव). — d) K $D_{1.2}$ वशम् (for गृहम्). B $D_{n1}$ $D_8$ $D_{6.8.10}$ ततोऽहं भृशमागता; $D_{3.4}$ तवास्मि वशमा°; $D_7$ त्वयैव च समा°.

12 a) K $D_{1-4.7}$ महा[illegible] (for °बाहुर्). — d) $K_3$ transp. श्रुतं and मया.

13 a) $D_1$ ते (for ये). K $D_{1.2}$ तत्र; S ते तु (for नीते).

14 a) $K_3$ $D_1$ S साल्व°. M अहं (for अन्यं). — b) B $D_{n1}$ $D_8$ $D_6$ वरं (for नरं). $K_3$ वा ध्यामि; $M_{3-5}$ नारंस्यामि (for नरं ध्यामि). $D_1$ ध्यायं; T G यामि; $C_a$ ध्यामि (as in text). K $D_{2-4.7.8.10}$ न($K_4$ $D_{8.10}$ व)रं ध्यायामि कंचन; $M_{1.2}$ नरं ध्यामीह कंचन.

15 $D_{1.3.4}$ $G_3$ om. (hapl.) 15. — b) $T_1$ एव (for अहं). $D_7$ त्वामहं शरणं गता. — $K_4$ om. (hapl.) 15c–16b. — c) S ($G_3$ om.) सा त्वां (M त्वा) (for सत्यं). $K_{1.2}$ शाल्वेय; $K_3$ S ($G_3$ om.) साल्वैतत्.

17 a) $K_3$ मामेवं; $M_2$ तथैवं (for तामेवं). — b) $K_3$ S साल्वः. $T_2$ $G_{2.3}$ काशी°. — d) $K_3$ B D (except $D_{1.2.7}$; $D_{n2}$ missing) $T_2$ transp. त्वचं and जीर्णां.

18 b) $K_3$ तथा; $M_{3-5}$ तदा (for तथा). $K_4$ B $D_{n1}$ $D_8$ $D_{6.8.10}$ नृपः ($B_{2.5}$ °प) (for [अ]नघ). — c) $D_{1.7.8}$ $T_1$ $G_3$ न श्रद्दधत्; $T_2$ $G_{1.2.5}$ नाश्रद्दधात्. — d) $K_1$ $D_8$ $G_3$ $M_{1.2}$ कन्यया; $K_4$ कन्यां तां; $B_{4.5}$ $D_{3.4}$ कन्यायां (for °या). $M_{3-5}$ कन्यां भरतसत्तम.

19 b) A few S MSS. काशी°. — d) $K_3$ $B_3$ बाष्पविक्लवया; $K_4$ °सं[illegible]क्लवया; $B_{1.2-5}$ $D_{n1}$ $D_{3.4.6.10}$ °विप्लुतया; $D_{2.7}$ °विक्लवया. $D_8$ बाष्पवि[illegible]वया.

20 b) $K_4$ B (except $B_3$) D (except $D_{1.7}$) T $G_{2.3}$ तत्र (for the second यत्र). — c) $B_{4.5}$ $D_{n1}$ transp. सन्तु and गतयः. — d) $D_{10}$ $G_3$ सत्यं; $C_{a.d}$ सन्तः (as in text). $K_{4.5}$ B $D_{n1}$ $D_8$ $D_{2-4.6.8.10}$ $G_1$ ध्रुवं; $D_{1.2}$ धृतं (for [अ]ब्रुवम्).

21 a) $K_{1.2.4}$ एवम् (for एवं). $K_4$ B D (except $D_{1.7}$; $D_{n2}$ missing) तां (for सं-). $D_1$ तां (for तु). — b) $K_3$ $D_{1.2}$ S साल्व°. $K_3$ $D_7$ ततः; $T_1$ तथा (for तदा). B $D_{n1}$ $D_8$ $D_{3.4.6.8.10}$ कन्यां ($D_{3.4}$ सुतां) शाल्वपतिस्त्यक्त्वा ($B_3$ शाल्वः का[illegible]पतेः सुतां). — c) $K_4$ B $D_{n1}$ $D_8$ $D_{6.8.10}$ परित्यजत (for पर्य°). — d) $D_{n1}$ $G_3$

C. 5. 6000 B. 5. 175. 24 K. 5. 175. 25 तपसा वा युधा वापि दुःखहेतुः स मे मतः ।
को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ॥ ८
एवं सा परिनिश्चित्य जगाम नगराद्बहिः ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ।
ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ९
आचख्यौ च यथा वृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ।
हरणं च विसर्गं च शाल्वेन च विसर्जनम् ॥ १०
ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ॥ ११
आर्तां तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् ॥ १२
एवं गते किं नु भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागैस्तपोनित्यैर्महात्मभिः ॥ १३
सा त्वेनमब्रवीद्राजन्क्रियतां मदनुग्रहः ।
प्रव्राजितुमिहेच्छामि तपस्तप्स्यामि दुश्चरम् ॥ १४
मयैवैतानि कर्माणि पूर्वदेहेषु मूढया ।
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् ॥ १५
नोत्सहेयं पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता ॥ १६
उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसंकाशाः कृपा भवतु वो मयि ॥ १७
स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः ।
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह ॥ १८

इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

$K_{1.2}$ नृपः (for मम).

8 $^{d}$) $K_3$ $Dn_1$ $Ds_2$ $D_8$ ततः (for मतः). — $^{e}$) $T_2$ $G_{1.3}$ यथा (for युधा). — $^{f}$) $T_1$ महाद्युतिं (for मही°).

9 $^{d}$) $D_{3.4}$ जनेश्वर (for ताप°). — $^{f}$) $G_{1.5}$ M ($M_1$ *inf. lin.*) परिरक्षिता.

10 $^{c}$) M (except $M_1$) हि (for च).

11 $^{b}$) $K_{1.2}$ $D_{7.8.10}$ शंसित°. — $K_3$ om. (hapl.) $11^{c}$–$12^{c}$. — $^{c}$) $K_5$ शैखावंत्यः; $T_2$ $G_{2.3.5}$ शैखापत्यः; $M_{1.2.4}$ शाखापत्यः; Ca. d as in text. — $^{d}$) = 1. 4. $5^{d}$.

12 $K_3$ om. $12^{a}$ (cf. v.l. 11); $K_5$ om. $12^{b}$. — $^{b}$) $D_1$ शाखावत्यः; $T_2$ $G_{2.3.5}$ शैखापत्यः; $M_{1.2.4}$ शाखापत्यः (cf. v.l. 11). — $^{c}$) Some MSS. निश्व°. $K_3$ $B_3$ $D_7$ अंबां (for बालां). — $^{d}$) $K_5$ °समन्वितां.

13 $^{a}$) B (except $B_3$) D (except $D_7$) नु किं (for किं नु). — $^{b}$) $K_2$ transp. शक्यं and कर्तुं. — $K_3$ om. (hapl.) $13^{cd}$. — $^{c}$) $B_{4.5}$ Dn $D_{6.10}$ महाभागै. — $^{d}$) $K_{1.3}$ तपोनिष्ठैः; $K_4$ B D (except $D_{1.2.7}$) तपो[illegible].

14 $K_5$ om. $14^{c}$–$15^{d}$. — $^{a}$) $K_3$ (m as in text) प्रव्रज्यामहं; $K_4$ प्रव्राज्यं°; B D (except $D_{1.2.7.8}$) प्रव्रा($Ds_1$ °ब्र)ज्यमहं; Ca. d.s [illegible] (for प्रव्राजितुमिह). — $^{d}$) $B_3$ दुष्करं; $M_2$ दुष्करं. $K_{1.2}$ तपसाप्ये सुदुष्करं.

15 $K_5$ om. 15 (cf. v.l. 14). — $^{a}$) B Dn $D_8$ यानि; $D_{6.8.10}$ T G तानि (for [ए]तानि). $D_{3.4}$ मयैव खलु विप्रेंद्राः. — $^{b}$) $K_4$ $B_{4.5}$ Dn $D_6$ पूर्वदेहे तु; $B_{1-3}$ $D_8$ $D_{3.4.8.10}$ °देहेन. — $^{c}$) $D_4$ कृतानि यानि कर्माणि. — $^{d}$) $T_2$ $G_3$ एवं (for एतत्). $G_3$ transp. फलं and ध्रुवं.

16 $^{a}$) $K_{1.2.5}$ $B_3$ $D_8$ $D_{1.3}$ नोत्सहे च; $K_3$ °हे तं; $K_4$ $B_{1.3-5}$ Dn $D_{6.10}$ °हे तु; $D_{3.4}$ °हेन (for °हेयं).

17 $^{a}$) $B_3$ $D_{1-4.10}$ $M_1$ (*inf. lin.* as in text).s उपदेष्टुम्; $Dn_2$ $D_8$ °दिष्टुम्. — $^{b}$) $D_{3-4}$ तापसा (for तापस्यं). $K_2$ $G_{1-3}$ °कल्मषा. $D_7$ तपस्तप्तुं हि तापसाः. — $^{c}$) $K_4$ B D °संकाशैः. — $^{d}$) $D_{3.4}$ नो भृशं (for वो मयि). $K_{1.2}$ क्रिया भवति या मयि.

18 $^{a}$) S (except $T_1$ $G_1$) ते (for स), and आश्वासयन् (for °यत्). — $^{c}$) $M_{3.5}$ सांत्वयामास तत्कार्यं च. — $^{d}$) $D_{3.4}$ नृपोत्तम (for द्विजैः सह).

Colophon. $D_{5.9}$ $G_4$ missing. — *Sub-parvan*: K B Dn $D_8$ $D_{1-4.6-8.10}$ $T_1$ $G_3$ M अंबोपाख्यान. — *Adhy. no.*: $D_8$ (*sec. m.*) 55 (=155); T $G_3$ $M_4$ 175; $G_{1.2}$ $M_{3.5}$ 176; $G_5$ 173 (as in text); $M_{1.2}$ 174. — *S'loka no.*: $K_5$ 18; Dn 44.

# १७४

भीष्म उवाच ।
ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तयन्तो वै किं कार्यमिति धर्मिणः ॥ १
केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्मदुपालम्भे मतिं चक्रुर्द्विजोत्तमाः ॥ २
केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥ ३
एवं गते किं नु शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च ते सर्वे तापसाः संशितव्रताः ॥ ४
अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५
प्रतिपत्स्यति राजा स पिता ते यदनन्तरम् ।
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ।
न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ॥ ६
पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि ।
गतिः पतिः समस्थाया विषमे तु पिता गतिः ॥ ७
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ।
राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ॥ ८
भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ।
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ॥ ९
ततस्तु तेऽब्रुवन्वाक्यं ब्राह्मणास्तां तपस्विनीम् ।
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ।
प्रार्थयिष्यन्ति राजेन्द्रास्तस्मान्मैवं मनः कृथाः ॥ १०

अम्बोवाच ।
न शक्यं काशिनगरीं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ ११ C. 5. 6033 B. 5. 176. 12 K. 5. 176. 12

**174**

1 c) B Dn Ds D6.8.10 ते (for वै). K2.4 D1.2.7 तां च कन्यां चिंतयंतः.

2 T2 G2 om. 2. — a) K3.4 पुनर् (for पितुर्). — b) T1 भारत (for तापसाः). — d) B D (except D1.2.7) हि तापसाः (for द्विजो°).

3 b) K4 नियोक्तुम्; K5 T1 नियोक्ष्यामि; D1.2 नियोज्य; T3 G1.3 M नियोक्ष्या(M3.5 °ज्या)म; G5 नियोक्ष्यामि (for नियोज्यम्). D3.4 नियोगमनुमेनिरे. — c) K1.2 व्यवस्यंत. — d) K4 D1.2.4.7 M3 तथा हि; T1 यदा हि; T3 G1.2.5 M1.2.4 यथा हि; G3 ततो हि; M5 ततो हि (for हि तेन).

4 4ab = (var.) 5. 173. 13ab. — a) K1 केन; K2.4 B D तु किं (for किं नु). M4 कर्तुं (for शक्यं). — b) T G (by transp.) कर्तुं भद्रे; M4 भद्रे शक्यं. K2.4 B3 तपस्विभिः; D3.4 महर्षिभिः. — c) K5 B (except B3) D (except D1.2.7) तां (for ते). — d) K1.2 Ds D6.8.10 शंसित°.

6 a) S प्रतिपद्यति. D12 प्रतिपद्यति राजेंद्रः. — d) B3 सुखं लप्स्यसि ते. — e) D3.4 खलु (for च ते). D3 G6 [ऽ]न्यागतिर्. D3 M (M1 *inf. lin.*) नार्या (for न्याय्या). — f) D3.4 भवेत (for भद्रे). K3 transp. यथा and पिता.

7 T2 G2 om. (hapl.) 7c–9b. — c) B3 (by transp.) पतिर्गतिः; T1 G1.3.5 भर्ता गतिः. — d) D3.4.6.8 विषमायाः (for °मे तु). K4 हि; B Dn Ds D10 च (for तु). S (T2 G2 om.) transp. पिता and गतिः.

8 T2 G2 om. 8 (cf. v.l. 7). — b) D6.8 [illegible] (for सुकु°). — c) B4 विशेषेण; Ca प्रकृत्या च (as in text). — d) B2.3 Dn D6.8 भाविनि. B4 कुमार्याश्च विशेषतः; Ds D3.4.10 सुकुमार्यास्तु भाविनि.

9 T2 G2 om. 9ab (cf. v.l. 7). — ab) D3.4 बहवः (for विद्यन्ते), and जायंते (for बहवो). — c) B3 तु; D3.4 हि (for वै). T2 G2 त्वसंत्यास् (for वसन्त्यास्).

10 D4 om. 10a–11b. — a) K4 D2.7 भूयः (for ततः). K4 च ते; K5 ते च; B Dn Ds D6.8.10 G1 त्वन्ये; D3 चैव; T1 ते हि; M1.2 तेथ (for तु ते). B5 पुनर् (for ऽब्रुवन्). K3 ततस्ते अब्रुवन्वाक्यं. — b) B Dn D2.3.6.8.10 तापसा° (for ब्राह्मणा°). — c) D3 हि चै° (for इहै°). — d) K3 B3 D1 शुभे (for वने). — e) B D (except D1–3.7; D4 om.) T G राजानस् (for राजेन्द्रास्). — f) T1 G3 न (for मा).

11 D4 om. 11ab (cf. v.l. 10). — a) K1.2.5 D1.2.7 शक्ये; K3 B1–3 Dn Ds D6.8 शक्ये; K4 शक्या (for शक्यं). B D (except D2.3.7; D4 om.) T G1.2 काशिनगरं. — b) T1 G1 गृहं.

C. 5. 6024 B. 5. 176. 18 K. 5. 176. 13 उषिता ह्यन्यथा बाल्ये पितुर्वेश्मनि तापसाः ।
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।
तपस्त्वभीप्सामि तापसैः परिपालिता ॥ १२
यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।
दौर्भाग्यं ब्राह्मणश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ॥ १३

भीष्म उवाच ।

इत्येवं तेषु विप्रेषु चिन्तयत्सु तथा तथा ।
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ॥ १४
ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ १५
तस्योपविष्टस्य ततो विश्रान्तस्योपशृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥ १६
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
स वेपमान उत्थाय मातुरस्याः पिता तदा ।
तां कन्यामङ्कमारोप्य पर्याश्वासयत प्रभो ॥ १७
स तामपृच्छत्कार्त्स्न्येन व्यसनात्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥ १८
ततः स राजर्षिरभूद्दुःखशोकसमन्वितः ।
कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः ॥ १९
अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः ।
मा गाः पितृगृहं भद्रे मातुस्ते जनको ह्यहम् ॥ २०
दुःखं छेत्स्यामि ते ऽहं वै मयि वर्तस्व पुत्रिके ।
पर्याप्तं ते मनः पुत्रि यदेवं परिशुष्यसि ॥ २१
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।

---

12 a) T2 G1.2.5 उचिता (for उषिता). K4 [अ]हं तथा; B Dn Ds D6.8.10 [अ]स्मि तथा; D3.4 [अ]स्मि यथा; D7 स्म तथा (for ह्यन्यथा). — b) D3.4 वै पुरा (for तापसाः). — e) K4 D1.2.7.8 G1 इहेच्छामि; G3 गमिष्यामि (for अभी°). — f) K3 B Dn Ds D6.8.10 परिरक्षिता; D7 T1 G3 °चारिता.

13 Dn2 om. 13. — a) K5 लोके मे (by transp.); B2 लोकेपि. — b) K4.5 B Dn1 Ds D1–4.6.8.10 G5 M3–5 Ca.d महात्ययं; D7 महद्भयं; Cn as in text. — c) K1.2 दौर्भाग्याद्. K4 B Dn1 D1 तापस° (for ब्राह्मण°). — d) K3 T1 G3 ततस् (for तस्मात्). — After 13, B5 ins. a colophon.

14 b) K1.2.5 च तत्तथा; K3 तथा यथा; B Dn Ds D6.8.10 यथातथं; D1.3.4 यथा तथा. — c) K3 तत्र सं° (for तद्वनं). D3.4 प्राप (for प्राप्तस्). — d) Some MSS. होतृ°. — After 14, S ins.:

573* तां तथा भामिनीं दृष्ट्वा श्रुत्वा चोद्विग्नमानसः ।
[ T1 G2.5 भाविनीं; T2 G3 -भाषिणीं. ]

16 B5 om. 16a–17b. — a) K3 B1.3.4 Dn Ds D6.8 T G1–3 सतो; D3.4 तदा; G5 तथा (for ततो). — e) D1.7.8 कथाश्च.

17 B5 om. 17ab (cf. v.l. 16). — a) S तु (for तां). — b) K4 D3.4.7.8.10 S काशिराजस्य. — After 17ab, N (except B5; K4 D3.4 om. lines 1–2) G3 ins.:

574* राजर्षिः स महातेजा बभूवोद्विग्नमानसः ।
तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपाः ।
राजर्षिः कृपयाविष्टो महात्मा होत्रवाहनः ।

[ (L. 1) Ds D1 सु- (for स). — (L. 2) K (K4 om.) D1.2.7 रुदतीं (for -वादिनीं). K3.5 D1.2.7 transp. श्रुत्वा and दृष्ट्वा. K1.2.5 D1.7.8.10 सु- (for स). — (L. 3) K (except K4) D1.2.7 जरया° (for कृपया°). ] — e) D10 °मानामुत्थाप्य. — d) K4 B D (except D1.7) मातुस्तस्याः; M1.2 (by transp.) अस्या मातुः. — f) B (except B2) Dn D6.8 पर्यैश्वा° (sic); D2 प्रत्याश्वा°. K4 D1.2 M1.4 प्रभुः (for प्रभो). D3.4 वीरश्वाश्वासयत्प्रभो.

18 a) K1.2.5 कन्यां वै (for कार्त्स्न्येन). — e) S (except M3.5) तु (for च). — d) T2 G [अ]भ्यवे- (G3 °पा-; G5 °चो)दयत्; M [अ]भ्युदीरयत् (for न्यवे°).

19 a) T2 G2.5 तु (for स). — e) T2 G2.5 स (for तन्). — d) K3 D6.8 सुसमाहितः; K4 [अ]पि महातपाः. D1 च महा°; D2 स महा°; T2 G2.5 तु महा°; G3 [अ]पि महाबलः.

20 a) Dn2 G3 वेपमानां च. — b) D3.4 चार्तां (for आर्तां). B (except B5) Ds D1.3.4.8.10 °दुःखितां. K1.2.5 कन्यां सोतीव दुःखितः; S कन्यामातत्स्वरस्य ।. — D2 om. 20c–21d. — c) K3.4 B4.5 Dn2 Ds2 D3.4.7 G1.5 पितुर् (for पितृ-).

21 D2 om. 21 (cf. v.l. 20). — a) D3 G2 transp. ते and अहं. K4 B D (except D1.7; D2 om.) दुःखं छित्वा(B3.4 हत्वा)महं ते वै. — b) B2.3 Ds D6.10 वर्तसि (for °स्व). S पुत्रि(G3 M1–4 °त्र)वत् (for पुत्रिके). — c) D3.4 न (for ते). S तपः; Cs मनः (as in text). B3.4 भद्रे; Dn Ds D3.4.6.8.10 वत्से; D1 देवि (for पुत्रि).

रामस्तव महद्दुःखं शोकं चापनयिष्यति ।
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ॥ २२
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ।
प्रतिष्ठापयिता स त्वां समे पथि महातपाः ॥ २३
ततस्तु सस्वरं बाष्पमुत्सृजन्ती पुनः पुनः ।
अब्रवीत्पितरं मातुः सा तदा होत्रवाहनम् ॥ २४
अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ।
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् ॥ २५
कथं च तीव्रं दुःखं मे हनिष्यति स भार्गवः ।
एतदिच्छाम्यहं श्रोतुमथ यास्यामि तत्र वै ॥ २६

इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## १७५

होत्रवाहन उवाच ।
रामं द्रक्ष्यसि वत्से त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसंधं महाबलम् ॥ १
महेन्द्रे वै गिरिश्रेष्ठे रामं नित्यमुपासत ।
ऋषयो वेदविदुषो गन्धर्वाप्सरसस्तथा ॥ २
तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य पूर्वं शिरसा तपोवृद्धं दृढव्रतम् ॥ ३
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम् ।
मयि संकीर्तिते रामः सर्वं तत्ते करिष्यति ॥ ४
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे । C. 5. 6067 B. 5. 176. 34 K. 5. 176. 34

— d) K1.2 °शुष्यसे; D1.7 Cs °शुष्यति.

22 a) K3 G3 राशि (for रामं). — b) K3 D1 महाव्रतं; K4 D2.7 M मनस्विनं (for तप°). — c) K (except K4) D2 T1 महादुःखं (for महद्दुःखं). B (except B2) Dn Ds D3.4.6.8.10 रामस्ते सुमहद्दुःखं; G3 रामो मद्वचनाद्दुःखं. — d) K1.2.5 शोकं वा नाशयिष्यति; K3 B D (except D1.2.7) शोकं चपनेष्यति. — f) K3 G3 स (for न). K3 D6.8 तद्-; B4 ते; Dn1 त्वद्- (for चेद्). D3.4 करिष्यति च ते वचः.

23 B3 om. 23c–24b. — c) M त्वा (for त्वां). — d) K5 सत्ये पथि; D10 समेष्यति; Ca.d समे पथि (as in text). S धर्म्ये पथि निरामये.

24 B3 om. 24ab (cf. v.l. 23). — a) B4 D3.4 ततः सा. K1.2.5 D1 सत्वरं; K4 B Dn D3.4.6.8.10 सुस्वरं; D7 सस्वनं (for °स्वरं). D3.4 वाक्यं (for बाष्पं). — d) M होत्रवाहनं.

25 a) Hypermetric! K (except K4) D1.2.7 अभिवाद्य त्वां शि°. — c) D3.4 अपि रामाय पश्येहं. — d) K3 आचार्यं; K3 अहं तं; D3.4 महांतं; T G आयांतं (for आर्यं तं). K3.4 D1.2.7 लोकपूजितं; T G °भावनं.

26 a) K3 B2 (by transp.) दुःखं तीव्रं; D5 D3 T2 तीव्रदुःखं; D1 दुःखं शीघ्रं. — b) K3 (marg. sec. m.) B D (except D1.2) नाशयिष्यति; T2 G3 हरिष्यति स. — c) K3.4 B D (except D7) ज्ञातुं (for श्रोतुं). — d) K4 B D (except D1.2.7) G2 यथा; K5 कथं (for अथ).

Colophon om. in B1.3–5 Dn Ds D6.8.10. D5.9 G4 missing. — *Sub-parvan:* K B3 D1–4.7 G5 M1.2.5 अंबोपाख्यान. — *Adhy. name:* D1 होत्रवाहनसमागमः; T1 G5 होत्रवाहदर्शनं; M1.2 होतृवाहनदर्शनं. — *Adhy. no.* (figures, words or both): D6 (*sec. m.*) 55 (=155); T G2 M4 176; G1.5 M3.5 177; G3 174 (as in text); M1.2 175. — *S'loka no.:* K5 30.

175

1 a) B D (except D2) भद्रे (for वत्से). — d) K3.4 D1.2.7 महाव्रतं; G5 महामुनिं.

2 a) K3 B D (except D1.2) महेंद्रं वै °श्रेष्ठं. — b) K3–5 B D (except D2) रामो. B Dn Ds D6.8.10 उपास्ति ह; D3.4 उपाश्रितः (for उपासते). — c) B D (except D1.2.7) वेदविद्वांसः.

3 D7 om. (hapl.) 3b–4a. — c) Hypermetric! G1 एव (for पूर्वं). B D (except D1.2) अभिवाद्य च तं मूर्ध्ना; T2 शिरसाभिवाद्य पूर्वं.

4 D7 om. 4a (cf. v.l. 3). — b) K3 अभीप्सितं; K5 B2 विनिश्चितं (for मनी°). — d) D10 transp. सर्वं and तत्ते. K1 ते तत्; K5 स्वेतत्; D5 तात (for तत्ते).

5 c) D3.4 जामदग्न्यस्ततो वीरः.

C. 5. 6057 B. 5. 176. 34 K. 5. 176. 34 जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ॥ ५
एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ॥ ६
ततस्ते मुनयः सर्वे समुत्तस्थुः सहस्रशः ।
स च राजा वयोवृद्धः सृञ्जयो होत्रवाहनः ॥ ७
ततः पृष्ट्वा यथान्यायमन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥ ८
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
कान्ता दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥ ९
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् ॥ १०
क्व संप्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वरः ॥ ११

अकृतव्रण उवाच ।

भवन्तमेव सततं रामः कीर्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥ १२
इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टास्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥ १३
इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्य चेयं तव च का भवतीच्छामि वेदितुम् ॥ १४

होत्रवाहन उवाच ।

दौहित्रीयं मम विभो काशिराजसुता शुभा ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानघ ॥ १५
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता ।
अम्बिकाम्बालिके त्वन्ये यवीयस्यौ तपोधन ॥ १६
समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत् ।
कन्यानिमित्तं ब्रह्मर्षे तत्रासीदुत्सवो महान् ॥ १७
ततः किल महावीर्यो भीष्मः शांतनवो नृपान् ।
अवाक्षिप्य महातेजास्तिस्रः कन्या जहार ताः ॥ १८
निर्जित्य पृथिवीपालानथ भीष्मो गजाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिः सह भारत ॥ १९
सत्यवत्यै निवेद्याथ विवाहार्थमनन्तरम् ।

---

6 a) S तां (for तु). — b) Here and below a few MSS. होतृ°. — c) Hypermetric!

7 d) K3 Dn1 D7 संजयो (for सृञ्जयो).

8 a) K2.5 B D (except D1.7) दृष्ट्वा (for पृष्ट्वा). B Dn Ds D6.8.10 कृतातिथ्यम् (for यथान्यायम्). — c) K1.2.6 च कुरुश्रेष्ठ; Ca भरत° (as in text).

9 b) Ds सुमनोरमाः; D3.4 सुमनोहराः (for ता मनो°). — c) K3.4 B Dn Ds D2–4.6–8.10 धन्या; D1 पुण्या; T G1.2 तथा; G5 कथा (for कान्ता). — d) B1.2.4 D3.4 °मुदान्विताः; D1 °समायुताः; Cs as in text.

10 c) B1.2.4 द्विजातीनां (for मह°).

11 a) B3 सोऽप्यस्ति (for संप्रति). K3 G1.3.5 M1.2 महाबाहुः. — c) K1.2 D1.2 M शक्यं; D7 शक्ये (for शक्यो). B2.5 [ऽ]सौ; D7 [ऽ]हं; G2 तु (for वै). — d) K1.2 D1.7 G1.5 M वरं; B1.4.5 Dn2 D2.10 वर (for वरः).

12 b) K5 D1.7 S (except T2 G1.2) कीर्तयते. K4 प्रभुः; D7 S (except G2 M1.2) विभो. — c) K (except K3) B3 D (except D1–4) प्रियसखा. — d) K2.4 T G2 पार्थिवः.

13 a) K3.5 वै (for श्वो). D3.4 इह प्रभाते श्वोभूते. — b) D2 D10 भवेदिति (for भवि°). — c) T2 G2 द्रष्टासि तम्; G1 °स्येतम्; G5 °सीमम्. K1 B2.3 D3.10 [आ]यातं; D1 प्राप्तं.

14 a) K1.2.5 transp. च and कन्या. — b) K D1.7 इह चा° (for वनमा°). — c) T G2 केयं (for चे°). — d) D7 °तामिच्छामि; T1 G1.5 भवी °च्छामि.

15 b) K4 B Dn Ds D6.8.10 प्रिया (for शुभा). — c) K1 B2 Dn2 Ds स्वयंवरा; K3 D3.4.8 °वरं. — d) S (except T1) भगिनीनां. T G M2 तदानघ.

16 b) A few S MSS. काशी°. — c) K1.2.5 B (except B2) Dn Ds कन्ये (for त्वन्ये). T2 G1.2 अंबिकांबालिकेत्यन्ये. — d) K1.2 B (except B2) D (except D1.7) यवीयस्यौ त°.

17 b) A few S MSS. काशी°. K1.2.3 B1.2.4 G3 तदा°; T अथा° (for ततो°). — c) B1.3.5 Dn Ds D6–8.10 विप्रर्षे; B2 D3.4 राजर्षे. — d) T1 तदा (for तत्र). G5 अभूद् (for आसीद्).

18 b) D2 नृपः; M1.2 महान् (for नृपान्). — c) K4 B Dn Ds D3.4.6.8.10 अधिक्षिप्य; D1.2.7 समाक्षिप्य; T2 G2 अव°.

19 c) D1 महावीर्यः (for विशु°). — d) B (except B3) भारतः (for °त).

20 b) K4 B D (except D1.7) विवाहं समनंतरं.

भ्रातुर्विचित्रवीर्यस्य समानयत प्रभुः ॥ २०
ततो वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् ।
अब्रवीत्तत्र गाङ्गेयं [illegible]ष्य द्विजर्षभ ॥ २१
मया शाल्वपतिर्वीर मनसाभिवृतः पतिः ।
न मामर्हसि धर्मज्ञ परचित्तां प्रदापितुम् ॥ २२
तच्छ्रुत्वा वचनं भीष्मः संमन्त्र्य सह मन्त्रिभिः ।
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥ २३
अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः ।
कन्येयं मुदिता विप्र काले वचनमब्रवीत् ॥ २४
विसर्जितास्मि भीष्मेण धर्मं मां प्रतिपादय ।
मनसाभिवृतः पूर्वं मया त्वं पार्थिवर्षभ ॥ २५
प्रत्याचख्यौ च शाल्वोऽपि चारित्रस्याभिशङ्कितः ।
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् ॥ २६
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात् ।
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते ॥ २७

अम्बोवाच ।

भगवन्नेवमेवैतद्यथाह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः ॥ २८
न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अवमानभयाच्चैव व्रीडया च महामुने ॥ २९
यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ॥ ३० C. 5. 6082 B. 5. 176. 5 K. 5. 176. 5

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

— $D_{a2}$ om. (hapl.) $20^{c}$–$21^{b}$. — $^{d}$) $K_{1.2}$ प्रभो.

21 $D_{a2}$ om. $21^{ab}$ (cf. v.l. 20). — $^{a}$) $K_{1.2.5}$ $B_{2}$ तत्र; $K_{3.4}$ $B_{1.3-5}$ $Dn_{1}$ $D_{1-4.6.8}$ तं तु; $Dn_{2}$ $D_{7.10}$ तत्तु (for ततो). — $^{b}$) $B_{8}$ $T_{2}$ $G_{1.2}$ समुपस्थिता; $D_{7}$ °पाहृतं; $T_{1}$ $G_{3.5}$ $M_{5}$ °पस्थितं. — $^{c}$) T G तात (for तत्र). — $^{d}$) $D_{3.4}$ नृप°; $M_{1.2}$ सभा° (for मन्त्रि°).

22 $22^{ab}$ = (var.) 5. 171. $6^{ab}$. — $^{a}$) $K_{3}$ $D_{1}$ S साल्व°. $K_{1.4}$ $Dn_{2}$ वीरः; $K_{2.5}$ $D_{7}$ पूर्वं (for वीर). — $^{b}$) $K_{1}$ विधृतः; $T_{1}$ हि धृतः (for [अ]भि°). — $^{d}$) $K_{1.2}$ $D_{2.7}$ प्रदाय वै; $K_{5}$ यवीयसे; T G प्रदापय (for °पितुम्). $K_{2}$m.$_{3.4}$ B Dn $D_{8}$ $D_{3.4.6.8.10}$ दातुं अन्यमानसां.

23 $^{b}$) $K_{3}$ $D_{2}$ बंधु° (for मन्त्रि°). — $^{c}$) $Dn_{1}$ $D_{1.7}$ घृतां (for इमां). — $^{d}$) = 1. 95. $5^{d}$; 96. $1^{d}$, $59^{d}$.

24 $D_{8}$ om. (hapl.) $24^{b}$–$25^{a}$. — $^{b}$) $K_{1.3}$ $D_{1}$ S साल्वं. $D_{1}$ तदा (for ततः). — $^{c}$) K (except $K_{4}$) $B_{2}$ $D_{1.2.7}$ विदिता (for मु°). $K_{3.4}$ B D (except $D_{1.2.7}$; $D_{8}$ om.) तत्र (for विप्र).

25 $D_{8}$ om. $25^{a}$ (cf. v.l. 24). — $^{b}$) $Dn_{1}$ स्वधर्मं; S धर्मे मां. $B_{2}$ $D_{1}$ प्रतिपालय. — $^{c}$) $Dn_{1}$ [अ]भिगतः; $D_{2}$ च वृतः; $T_{1}$ हि वृतः.

26 $^{a}$) $K_{1.3}$ $D_{1}$ S साल्वो. $K_{4}$ B (except $B_{2}$) Dn $D_{8}$ $D_{6.8.10}$ [ऽ]स्याह (for ऽपि). — $^{b}$) $Dn_{1}$ $D_{8}$ चारित्र्यस्य; $T_{2}$ चारित्रं च. $K_{3}$ [अ]विशंकितः; $B_{1.3}$ S (except $G_{3}$) [अ]तिशंकितः; $D_{3.4}$ [अ]भिशंकिता. $K_{1.2.4.5}$ $D_{1.2.7}$ चारित्रेण्या वि($D_{2}$ °भि)शंकितः. — $^{d}$) $B_{5}$ $D_{7}$ $T_{2}$ $G_{2.3}$ तपसि; $D_{8}$ $M_{3-5}$ तपस्ये. $K_{1.2.5}$ निरता; $T_{1}$ [ऽ]तिरता (for ऽभि°).

27 $^{a}$) $K_{1.2}$ तु (for च). — $^{c}$) $B_{8}$ $D_{8}$ $D_{10}$ उत्पत्तिः; $D_{3.4.7.8}$ उत्पत्तौ; Ca as in text. — $^{d}$) $K_{1.2.5}$ भीष्ममेव हि; $D_{8}$ $D_{6-8.10}$ भीष्म एवेह. — After 27, $K_{1-3}$ $D_{8}$ ins.:

575* एवं ब्रुवति वै राज्ञि कन्या वचनमब्रवीत् ।

28 $^{a}$) $K_{4}$ B (except $B_{2}$) Dn $D_{8}$ $D_{6.8.10}$ इह (for एतद्).

29 $^{a}$) $K_{1.2.5}$ न ह्युत्सहामि नगरं; $K_{3}$ नाभ्युत्सहामि नगरं; $D_{8}$ न समुत्सहे स्व° (hypermetric!); $D_{10}$ नोत्सहे पितृ°; $T_{1}$ नाभ्युत्सहे स्व°. — $^{c}$) $K_{4}$ B (except $B_{2}$) D (except $D_{1.2.7}$) अप° (for अव°). — $^{d}$) $K_{3.4}$ $D_{1.2.7}$ $G_{1}$ °मते (for °मुने).

30 $^{a}$) $D_{1}$ स (for यत्). $D_{1}$ यद्; $T_{1}$ $G_{3.4}$ M मा; $G_{5}$ मे (for मां). $K_{1}$ $Dn_{2}$ $M_{1.2}$ भगवन्. — $^{b}$) $K_{4}$ $B_{2}$ $D_{a2}$ $D_{1}$ $G_{2}$ $M_{1.2}$ °सत्तमः. — $^{c}$) $K_{1.2}$ कार्यसमं. — $^{d}$) $Dn_{1}$ $D_{7}$ $G_{2}$ भगवान्. $D_{3.4}$ मनः (for मतिः).

Colophon om. in $G_{1}$. $D_{3.9}$ $G_{4}$ missing. — *Sub-parvan:* K B Dn $D_{8}$ $D_{1-4.6-8.10}$ $T_{1}$ $G_{5}$ $M_{1.2.5}$ अंबोपाख्यान. — *Adhy. no.* (figures, words or both): $D_{8}$ (*sec. m.*) 56 (= 156); T $M_{4}$ 177; $G_{2}$ 187; $G_{3}$ 175 (as in text); $G_{5}$ $M_{3.5}$ 178; $M_{1.2}$ 176. — *S'loka no.:* $K_{5}$ 30; Dn 59.

# १७६

C. 5. 6066
B. 5. 177. 1
K. 5. 177. 1

अकृतव्रण उवाच ।
दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत्त्वं वत्से ब्रवीहि मे ॥ १
यदि सौभपतिर्भद्रे नियोक्तव्यो मते तव ।
नियोक्ष्यति महात्मा तं रामस्त्वद्धितकाम्यया ॥ २
अथापगेयं भीष्मं त्वं रामेणेच्छसि धीमता ।
रणे विनिर्जितं द्रष्टुं कुर्यात्तदपि भार्गवः ॥ ३
सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते ।
यदत्रानन्तरं कार्यं तदद्यैव विचिन्त्यताम् ॥ ४

अम्बोवाच ।
अपनीतास्मि भीष्मेण भगवन्नविजानता ।
न हि जानाति मे भीष्मो ब्रह्मञ्शाल्वगतं मनः ॥ ५
एतद्विचार्य मनसा भवानेव विनिश्चयम् ।
विनिश्चिनोतु यथान्यायं विधानं क्रियतां तथा ॥ ६
भीष्मे वा कुरुशार्दूले शाल्वराजेऽथ वा पुनः ।
उभयोरेव वा ब्रह्मन्युक्तं यत्तत्समाचर ॥ ७
निवेदितं मया ह्येतद्दुःखमूलं यथातथम् ।
विधानं तत्र भगवन्कर्तुमर्हसि युक्तितः ॥ ८

अकृतव्रण उवाच ।
उपपन्नमिदं भद्रे यदेवं वरवर्णिनि ।
धर्मं प्रति वचो ब्रूयाः शृणु चेदं वचो मम ॥ ९
यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् ।
शाल्वस्त्वां शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ १०
तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भामिनि ।
संशयः शाल्वराजस्य तेन त्वयि सुमध्यमे ॥ ११
भीष्मः पुरुषमानी च जितकाशी तथैव च ।
तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं त्वया ॥ १२

---

## 176

1 [a]) K1.2 दुष्टं द्वयं; K5 दुष्टद्वयं; T G1 दुःखं द्वयोः; G2.3.5 दुःखद्वयोः; Cs as in text. — [c]) T1 एवैतत् (for अबले). — [d]) K4 B D (except D1.7) वदस्व (for ब्रवीहि).

2 [a]) D10 शाल्वो (for भद्रे). — [b]) B3 Dn Ds D3.4.10 मतस्; D6.8 मतिस् (for मते). — [c]) K1.2.5 D2 T G2.5 महात्मानं; K4 B Dn Ds D3.4.6.8.10 G1 महात्मा स.

3 [a]) B D (except D1.2.7) त्वं (for तं).

4 [b]) D8 G1.3.5 तथैव च; T तदे(T2 °दे)व च; G2 यत्तदेव; M (except M1) तवैव च (for तव चैव). — [c]) K4 B D (except D1.7) ते भृशं (for [अ]नन्तरं). — [d]) K5 D1.6.8 T2 G1.2.5 M1.2 अत्र (for अद्य). D10 अभिधीयतां (for विचि°).

5 [b]) D3.4 भगवन्नागसाह्वयं. — [c]) B D (except D1.7) न मिजानाति (D3.4 °नीत). K1.2 B3 D3.4 transp. मे and भीष्मो. — [d]) M ब्रह्मन् (for ब्रह्मन्). K3 D1 S साल्व°.

6 [b]) K4 B1.3.4 Dn Ds D6.10 एतद्; B3 इह (for एव). S भगवानेव निश्चयं.

7 [a]) Ds D6.10 च (for वा). — [b]) D1 S (mostly) साल्व°. — [d]) B1.3–5 Dn Ds D6.8.10 युक्तं यत् (for यद्युक्तं). B3 यत्तद्युक्तं समा°.

8 [ab]) K1.2.5 तेन दुःखं ह्येतद् (for ह्येतद्दुःखमूलं). D3.4 यथायथं; G3 M5 यथा तथा. — [c]) D3.4 त्वत्र (for तत्र). Ds2 D6.7 T1 भगवान्. — [d]) Ds2 D6.7 T1 अर्हति. D1 तत्त्वतः; D7 धर्मवित्; D8 संयुतः (for युक्तितः).

9 T2 G2 om. 9[c]–10[b]; G2 om. the ref. also. — [b]) K4 एतद् (for एवं). — [c]) K (except K4) D2.7 T1 G1 धर्म्यं. K3 T1 ब्रूयां. — [d]) G5 शृण्वेदं वचनं मम.

10 T2 G2 om. 10[ab] (cf. v.l. 9). — [ab]) M1.2 न नयेत (for वै न नयेद्). — [c]) K3 D1 S (mostly) साल्वः. M3–5 त्वा (for त्वां). D1 भीतः (for भीरु). — [d]) K3.5 D7 रामनोदितः; M कामचारितः (M4 *sup. lin.* as in text).

11 [a]) S (except G3) येन (for तेन). — [b]) K3–5 S नीता च (for नीतासि). B Dn Ds D3.4.6 (m as in text).8.10 भाविनि; D7 G1.3.5 M3 भामिनी. — [c]) K3 D1 S साल्व°.

12 [b]) D1.7 मदोत्कटः (for तथैव च). — [d]) K3 B D (except D1.2.7.8) तव (for त्वया).

☞ In D4, the portion from stanza 13 up to

अम्बोवाच ।
... महान्ब्रह्म- दि कामोऽभिवर्तते ।
घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ १३
भीष्मं वा शाल्वराजं वा यं वा दोषेण गच्छसि ।
प्रशाधि तं महाबाहो यत्कृतेऽहं सुदुःखिता ॥ १४
भीष्म उवाच ।
एवं ...यतामेव तेषां स दिवसो गतः ।
रात्रिश्च भरतश्रेष्ठ ...शीतोष्णमारुता ॥ १५
ततो रामः ...तेजसा ।
शिष्यैः परि...ता ...चीरधरो मुनिः ॥ १६
ध...पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधी ।
विरजा राजशार्दूल सोऽभ्यया...ञ्जयं नृपम् ॥ १७
ततस्तं तापसा दृष्ट्वा स च राजा म...तपाः ।
तस्थुः प्रा...लयः सर्वे सा च कन्या तपस्विनी ॥ १८
...जयामासुरव्यग्रा मधुपर्केण भार्गवम् ।
अर्चितश्च यथायोगं निषसा- सहैव तैः ॥ १९
ततः ...व्यतीतानि कथयेते स्म तावुभौ ।
सृञ्जयश्च स राजर्षिर्जामदग्न्यश्च भारत ॥ २०
ततः कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबल- ।
उवाच मधुरं काले रामं वचनमर्थवत् ॥ २१
रामेयं मम दौहित्री काशिराज...ता प्रभो ।
अस्याः शृणु य...तत्त्वं कार्यं कार्यविशारद ॥ २२
परमं कथ्यतां चेति तां रामः प्रत्यभाषत ।
ततः साभ्यगमद्रामं ज्वलन्तमिव पावकम् ॥ २३
सा चाभिवाद्य चरणौ रामस्य शिरसा शुभा ।
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्याम...तः स्थिता ॥ २४ C. 5. 7008 B. 5. 177. 24 K. 5. 177. 24

5. 178. 29ab is lost on a missing fol.; the MS. is mostly ignored up to the end of the lacuna.

13 a) K1.2 B2 D1.2.7 महा; K3.4 B1.3-5 Dn Ds D3.10 सदा; D6.8 ततो (for महान्). — b) K4.5 हि वर्तते; D5 [ऽ]ति°; D8 G3 M3.4 [ऽ]भिवर्तते; D7 [ऽ]पि वर्तते; D8 [ऽ]भ्यवर्तत; M1.2 [ऽ]नुवर्तते.

14 a) K3 D1 S साल्व°. — b) B3 यस्मात्...भि...च्छसि. — After 14, T2 G1.2 ins. a colophon (*adhy. no.* 178).

16 d) K1.2 D3 जटी; K5 शिखी (for जटा-). T G नृप (for मुनिः).

17 b) A few MSS. परश्वथी, °स्वधं, °श्वधं. B Ds D3.6.10 स च राजा महातपाः (=18b). — c) K4 D5 G3 विरजो; B (except B4) Ds D6.10 विनयाद्; M4 (*inf. lin.*) विराजन्. D8 विनयाद्वरशार्दूल. — d) K3 B Dn2 D6 transp. सोऽभ्य° and सृञ्जयं. D3 सृंजयः. B3.5 D3.6 नृपः; B4 तदा (for नृपम्). D8 D10 सृंजयः सोऽभ्यगान्नृपः.

18 a) K3 B3 D7 T1 G3 ते (for तं). D2 तापसं. D3 रामं; D7 सर्वे (for दृष्ट्वा). — D7 om. (hapl.) 18cd. — b) D3 (m as in text) दृष्ट्वा (for स च). — Dn1 om. 18c-19d. — c) K4 B D (except D1.2; Dn1 D7 om.) राजन् (for सर्वे). — d) D8 D10 यशा° (for तप°).

19 Dn1 om. 19 (cf. v.l. 18). — a) D2 G2 अव्ययं. — c) K1.2 अर्हितश्च; S पूजितश्च. D1 स (for च). K3 ...यथार्थं; K4 B D (except D1-3.7; Dn1 om.) T G यथान्यायं. — d) D1 T G1.2.5 M सहाथ तैः; D7 सहाश्वरैः; G3 समासदैः.

20 a) B3 Dn1 G3 पूर्वं (for पूर्व-). — b) K4 B D M3-5 कथयंतौ. — c) D1.2 transp. च and स. B Dn Ds D6.8.10 आसा(D3 D8 °स; D10 °सी)तां जामदग्न्यश्च. — d) K5 प्रतापवान् (for च भारत). B Dn Ds D6.8 सृंजयश्चैव भारत; D10 सृंजयो होत्रवाहनः (=5. 175. 7d, 28d).

21 c) K5 B3 D (except D1.7) G5 तथा (for ततः). — c) K1 Ds D1 वचनं (for मधुरं). — M3 om. 21d-23d. — d) T G3 कामं (for रामं). D1 मधुरम् (for वचनम्). K3 उत्तमं (for अर्थवत्).

22 M3 om. 22 (cf. v.l. 21). — b) A few MSS. काशी°. K D1.7 विभो (for प्रभो).

23 M3 om. 23 (cf. v.l. 21) — a) T2 G3 प्रथमं (for परमं). — b) D7 transp. तां and रामः. B3 D3.8 T G M3.4 तं (for तां). D1.2 रामः प्रत्यभ्यभाषत. — c) K4 B (except B2) Dn Ds D6.10 साभ्यवदद्; D3.7 साभ्यागमद्. S राजन् (for रामं). — d) K1.2.5 ज्वलंतमनलं यथा.

24 a) K3-5 T2 G2.5 M1.2 साथा°; B Dn Ds D3.6.8.10 ततो°; D7 सांबा°; G1 साभिवाद्याथ (for सा चाभि°). — b) Dn2 Cn शिरसौ (=श्रेष्ठौ Nil.) (for शिरसा). K4 तदा; B (except B2) Dn Ds D6 M1.2 शुभौ; D3 उभौ (for शुभा). — c) K1.2 D1.2 T2 G2 ...भ्यां; Dn1 पद्मदलाभाभ्यां.

C. 5. 7007
B. 5. 177. 25
K. 5. 177. 25
रुरोद सा शोकवती बाष्पव्याकुललोचना ।
प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् ॥ २५

राम उवाच ।

यथासि [illegible]यस्यास्य तथा मम नृपात्मजे ।
ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव ॥ २६

अम्बोवाच ।

भगवञ्शरणं त्वाद्य प्रपन्नास्मि महाव्रत ।
शोकपङ्कार्णवाद्घोरादुद्धरस्व च मां विभो ॥ २७

भीष्म उवाच ।

तस्याश्च दृष्ट्वा रूपं च वयश्चाभिनवं पुनः ।
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् ॥ २८
किमियं वक्ष्यतीत्येवं विमृशन्भृगुसत्तमः ।
इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः ॥ २९
कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता ।
सर्वमेव यथातत्त्वं कथयामास भार्गवे ॥ ३०
तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम् ॥ ३१
प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि ।
करिष्यति वचो धर्म्यं श्रुत्वा मे स नराधिपः ॥ ३२
न चेत्करिष्यति वचो मयोक्तं जाह्नवीसुतः ।
धक्ष्याम्येनं रणे भद्रे सामात्यं शस्त्रतेजसा ॥ ३३
अथ वा ते मतिस्तत्र राजपुत्रि निवर्तते ।
तावच्छाल्वपतिं वीरं योजयाम्यत्र कर्मणि ॥ ३४

अम्बोवाच ।

विसर्जितास्मि भीष्मेण श्रुत्वैव भृगुनन्दन ।
शाल्वराजगतं चेतो मम पूर्वं मनीषितम् ॥ ३५
सौभराजमुपेत्याहमब्रुवं दुर्वचं वचः ।
न च मां प्रत्यगृह्णात्स चारित्रपरिशङ्कितः ॥ ३६

---

25 $^{a}$) K $D_{1.2}$ Ca.d शुक्लद($K_{3.5}$ Ca °द्दं)ती (for शोक°). S प्ररुरोद वरारोहा. — $^{b}$) $D_5$ बाष्पगद्गदलोचना; $M_{3-5}$ °पया[illegible]. — $^{c}$) $K_{1.2.3}$ चैनं; $D_{10}$ रामं (for चैव). — $^{d}$) $D_{10}$ तापसं (for शरण्यं).

26 $^{a}$) $K_{3-5}$ B D त्वं (for [अ]सि). $D_{10}$ असि (for अस्य). — $^{b}$) $B_{3-5}$ Dn $D_5$ $D_{6.8.10}$ मे त्वं ($Dn_1$ [by transp.] त्वं मे) (for मम). — $^{c}$) $K_{1.2.3}$ वद (for ब्रूहि).

27 $^{a}$) $K_{1.2.3}$ शरण्यं (for भगवन्). — $^{b}$) $B_{1.3}$ D (except $Dn_1$ $D_{1.2}$) महाव्रतं. — $^{cd}$) $Ds_1$ $D_{6.10}$ °पंकार्णवे. B Dn $D_5$ $D_{6.8.10}$ मग्नां घोरा[illegible]द्धर (for घोरादुद्धरस्व च). $M_{1.2}$ मा (for मां). $B_2$ S प्रभो; $B_{4.5}$ स्थितां (for विभो).

28 $^{a}$) $K_{1.2}$ स; $K_3$ $B_{1.3}$ $D_{1-3.7}$ तु (for the first च). $K_3$ $D_7$ तद्रूपं (for रूपं च). $K_5$ तस्याः सुरूपं दृष्ट्वा च. — $^{b}$) $K_{3-5}$ B D (except $D_{10}$) $G_1$ वपुश्च (for वयश्च). $K_2$ $D_{2.7}$ $G_5$ $M_4$ चापि (for चाभि-). $B_{2.4}$ शनैः (for पुनः). — $^{d}$) $K_{3.4}$ $D_{1.2.7}$ रामश्चिंतां समा($K_4$ $D_{2.7}$ °तामथा)विशत्.

29 $D_1$ om. 29–30. — $^{a}$) $K_{1.3}$ $D_5$ M एव (for एवं). — $^{b}$) K (except $K_4$) $D_7$ $M_3$ भृगुनंदनः. B Dn $D_5$ $D_{6.8.10}$ विमर्शी भृगूद्वहः.

30 $D_1$ om. 30 (cf. v.l. 29). — $^{a}$) $K_{1.2}$ एतद् (for एव). $D_{10}$ यथावृत्तं.

31 $^{a}$) $T_1$ $G_3$ श्रुत्वा तु (for तच्छ्रुत्वा). $B_{4.5}$ $T_1$ च (for तु). — $^{d}$) $K_{1.2.3}$ $D_{1.2.7}$ विनिश्चित्यार्थनिश्चयं ($D_1$ °श्चितं); $D_5$ निश्चित्यात्मवि°; $T_1$ निश्चित्य गुरुकार्यं; $T_2$ G $M_4$ निश्चितार्थों ($G_{3.5}$ °र्थे-) विनिश्चये.

32 Before 32, N ins. राम उ° ($K_3$ $D_{1.3}$ om. उ°). — $^{b}$) B Dn $Ds_1$ $D_{2.6.8.10}$ भाविनि. $D_5$ [illegible] गामिनि. — $^{c}$) $K_4$ B (except $B_2$) Dn $D_5$ $D_{6.8.10}$ T G मह्यं (for धर्म्यं). — $^{d}$) B Dn $D_{6.10}$ च स; $D_8$ स च; T G धर्म्यं (for मे स).

33 $^{b}$) $B_2$ $D_7$ $M_3$ मयोक्तो. — $^{c}$) B (except $B_2$) Dn अहं (for एनं).

34 $^{b}$) K (except $K_3$) B Dn $D_{2.3.6}$ न (for नि-). — $^{c}$) N यावत् ($D_7$ याहि). $K_3$ $D_1$ S साल्व°.

35 $^{a}$) $K_4$ B D (except $D_{1.7}$) अहं (for अस्मि). — $^{b}$) $D_7$ एतद् (for एव). — $^{c}$) $K_3$ $D_1$ S साल्व°; $T_2$ $G_{1.2.5}$ °पतिं. $K_4$ B D भावं (for चेतो). — $^{d}$) $K_{3.5}$ $Dn_1$ $D_{2.10}$ T $G_1$ $M_{3.5}$ पूर्व- (for पूर्वं).

36 $^{a}$) A few N MSS. शा(or सा)ल्व° (for सौभ°). — $^{b}$) $K_3$ $B_3$ Dn $D_5$ $D_{6-8.10}$ अवोचं (for अब्रुवं). $K_1$ दुःखदं; $D_{10}$ कृपणं (for दुर्वचं). — $^{c}$) $K_{1.2.3}$ न मां स वै प्रत्यगृह्णात्. — $^{d}$) $K_{1.2.3}$ शीलस्य परि°; $K_3$ चारित्रं प्रति; $D_5$ चारित्रमथ [illegible] $T_1$ चारित्रे मम; $T_2$ G $M_{3-5}$ चारित्रमभि- ($G_3$ °ति-); $M_{1.2}$ चारित्रमस्या[illegible]. Some MSS. चारित्र्य°.

तत्सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन ।
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ॥ ३७
ममात्र व्यसनस्यास्य भीष्मो मूलं महाव्रतः ।
येनाहं वशमानीता समुत्क्षिप्य बलात्तदा ॥ ३८
भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम् ।
प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ३९
स हि लुब्धश्च मानी च जितकाशी च भार्गव ।
तस्मात्प्रतिक्रिया कर्तुं युक्ता तस्मै त्वयानघ ॥ ४०
एष मे ह्रियमाणाया भारतेन तदा विभो ।
अभवद्धृदि संकल्पो घातयेयं महाव्रतम् ॥ ४१
तस्मात्कामं ममाद्येमं राम संवर्तयानघ ।
जहि भीष्मं महाबाहो यथा वृत्रं पुरंदरः ॥ ४२

इति श्रीमहाभारते उद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## १७७

भीष्म उवाच ।
एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो ।
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ १
काश्ये कामं न गृह्णामि शस्त्रं वै वरवर्णिनि ।
ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते ॥ २
वाचा भीष्मश्च शाल्वश्च मम राज्ञि वशानुगौ ।
भविष्यतोऽनवद्याङ्गि तत्करिष्यामि मा शुचः ॥ ३
न तु शस्त्रं ग्रहीष्यामि कथंचिदपि भामिनि ।
ऋते नियोगाद्विप्राणामेष मे समयः कृतः ॥ ४
अम्बोवाच ।
मम दुःखं भगवता व्यपनेयं यतस्ततः ।
तत्तु भीष्मप्रभवं मे तं जहीश्वर माचिरम् ॥ ५ C. 5. 7029 B. 5. 178. 5 K. 5. 178. 5

38 $^{a}$) $K_4$ B D (except $D_2$) तु (for [अ]त्र). $D_7$ आसीत् (for अस्य). — $^{b}$) $K_5$ transp. भीष्मो and मूलं. $D_1$ हेतु: (for मूलं). $K_{1.2}$ $B_{2.5}$ Ds $D_{3.6.10}$ $M_{3-5}$ महाव्रत; T G महातपाः. — $^{c}$) $D_8$ येनाहं च समानीता. — $^{d}$) $K_{1.2}$ समुत्कृष्य ब°.

39 $^{d}$) $B_3$ transp. अप्रियं and उत्तमं. K (except $K_4$) च($K_1$ by corr. भ)रस्य प्रियमुत्तमं.

40 $^{a}$) $K_{1.2}$ दुष्ट°; $T_1$ दृप्त° (for लुब्ध°). B Dn Ds $D_{6.8.10}$ नीचश्च (for मानी च). — $^{b}$) $K_4$ $D_7$ भारतः (for भार्गव). — $^{cd}$) $K_{3.4}$ $D_{1.3.7}$ transp. कर्तुं and युक्ता.

41 $Dn_2$ $D_1$ om. (hapl.) $41^{a}$–$42^{b}$. — $^{a}$) $K_3$ $Dn_1$ एवं (for एष). $K_3$ $B_{3-5}$ $Dn_1$ क्रियमाणाया:; Ca as in text. — $^{b}$) $D_6$ तदाभिभो; T $G_2$ तथा विभो.

42 $Dn_2$ $D_1$ om. $42^{ab}$ (cf. v.l. 41). — $^{a}$) $K_3$ $B_3$ $D_7$ अपि (for अद्य). $K_3$ T $G_{1.2.5}$ एव; $B_3$ $D_{2.8}$ एवं; $D_7$ एतं; $D_{10}$ $M_{3.5}$ एनं (for इमं). — $^{b}$) B D (except $D_{2.7}$) संपादय (for संव°).

Colophon om. in $K_4$. $D_{4.5.9}$ $G_4$ missing. — *Sub-parvan:* $K_{1-3.5}$ B Dn Ds $D_{1-3.6-8.10}$ $G_3$ $M_{1-4}$ अंबोपाख्यान. — *Adhy. name:* $T_1$ भगवद्भार्गवदर्शनं; $G_3$ भार्गव वा°नं. — *Adhy. no.:* $D_6$ (*sec. m.*) 57 (=157); $T_1$ $M_4$ 178; $T_2$ $G_{1.2.5}$ $M_{3.5}$ 179; $G_3$ 176 (as in text); $M_{1.2}$ 177. — *S'loka no.:* $K_3$ $Dn_2$ 42; $Dn_1$ 40.

177

☞ This adhy. is missing in $D_4$ (cf. v.l. 5. 176. 13); the MS. is mostly ignored here.

1 $^{a}$) $K_{1.2.5}$ तया (for तदा). — $^{cd}$) $K_{3.4}$ $B_2$ $D_{1.2.7}$ transp. रुदतीं and कन्यां. Ds उवाच रुदती दीना चोदयंती etc.

2 $D_2$ transp. $2^{ab}$ and $4^{ab}$. — $^{a}$) $B_{4.5}$ D (except $D_{1-3}$) transp. कामं and न.

3 $^{a}$) $K_{1.2.5}$ Ds वचो (for वाचा). $K_3$ $T_1$ $G_{1.3}$ transp. भीष्म° and शाल्व°. $K_3$ S साल्व°.

4 $D_2$ transp. $2^{ab}$ and $4^{ab}$. — $^{a}$) $B_3$ T G $M_{3-5}$ च (for तु). T G $M_{3-5}$ प्रगृह्णामि (for ग्रही°). $M_{1.2}$ न शस्त्रं प्रतिगृह्णामि. — $^{b}$) B D (except $D_{1.2.7}$) भाविनि. — $^{c}$) S नियोगं. — $^{d}$) $K_3$ इति मे निश्चयः कृतः.

5 $M_4$ om. 5–6. — $^{b}$) K $D_{2.7.8}$ $G_3$ $M_2$ ततस्ततः; $D_1$ यथा तथा (for यतस्ततः). — $^{c}$) $B_{1.3.5}$ D (except $D_{1.2.7}$) तच्च; $B_{2.4}$ अत्र (for तत्तु). K (except $K_4$) वै (for मे). — $^{d}$) $D_3$ जहीश्वर॰नदीसुतं; $T_2$ G तं जहि

C. 5. 7080
B. 5. 178. 6
K. 5. 178. 6

राम उवाच ।

काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ ।
शिरसा वन्दनार्हो ऽपि ग्रहीष्यति गिरा मम ॥ ६

अम्बोवाच ।

जहि भीष्मं रणे राम मम चेदिच्छसि प्रियम् ।
प्रतिश्रुतं च यदि तत्सत्यं कर्तुमिहार्हसि ॥ ७

भीष्म उवाच ।

तयोः संवदतोरेवं राजन्रामाम्बयोस्तदा ।
अकृतव्रणो जामदग्न्यमिदं वचनमब्रवीत् ॥ ८
शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि ।
जहि भीष्मं रणे राम गर्जन्तमसुरं यथा ॥ ९
यदि भीष्मस्त्वयाहूतो रणे राम महामुने ।
निर्जितो ऽस्मीति वा ब्रूयात्कुर्याद्वा वचनं तव ॥ १०
कृतमस्या भवेत्कार्यं कन्याया भृगुनन्दन ।
वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ॥ ११
इयं चापि प्रतिज्ञा ते तदा राम महामुने ।
जित्वा वै क्षत्रियान्सर्वान्ब्राह्मणेषु प्रतिश्रुता ॥ १२
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ।
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव ॥ १३
शरणं हि प्रपन्नानां भीतानां जीवितार्थिनाम् ।
न शक्ष्यामि परित्यागं कर्तुं जीवन्कथंचन ॥ १४
यश्च क्षत्रं रणे कृत्स्नं विजेष्यति समागतम् ।
दृप्तात्मानमहं तं च हनिष्यामीति भार्गव ॥ १५
स एवं विजयी राम भीष्मः कुरुकुलोद्वहः ।
तेन युध्यस्व संग्रामे समेत्य भृगुनन्दन ॥ १६

राम उवाच ।

स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम ।
तथैव च करिष्यामि यथा साम्नैव लप्स्यते ॥ १७

---

त्वर मा चिरं.

6 G3 M4 om. 6 (for M4 cf. v.l. 5). — a) K4 D8 श्रुवं सुभ्रु; D1 चिरात्सुभ्रु (for पुनर्ब्रूहि). — c) S (G3 M4 om.) वंदमानो (for वन्दनार्हो). K3 शिरसा वंदितस्तः. — d) T G (G3 om.) गिरं (for गिरा).

7 a) = 9a. T2 M3-5 वीर; G1 भीम; G2.4 M1.2 वीरं (for राम). G2 महावीर (for रणे राम). — After 7a, B3.4 Dn D3 D6.8.10 ins.:

576* गर्जन्तमसुरं यथा ।
समाहूतो रणे राम.
[ Cf. 9cd. ]

— b) K D1.5.7 transp. इच्छसि and प्रियं. Dn1 चेदिच्छसि प्रियं प्रति. — c) Dn D3 D6.8 यद्यपि; D10 सददसि (for यदि तत्). — d) D1.5.7 S इच्छसि (for अर्हसि). Dn D3 D6.8.10 तत्सत्यं कर्तुमर्हसि.

8 S om. the ref. — a) Dn1 M (except M3) एव (for एवं). — c) Hypermetric! B Dn D3 D6.10 ऋषिः परमधर्मात्मा. Ca.3 cite ऋषिः; Cnp अकृतव्रणः (as in text).

9 a) Hypermetric! — b) K3 transp. कन्यां and न. G3 रक्षितुम् (for न त्यक्तुम्). — B1-3 Dn D3 D10 om. 9cd (cf. 576*). — c) = 7a. D3 शत्रुं (for भीष्मं).

10 B4.5 om. 10ab. — a) S यथा (for यदि). B1-3 Dn D3 D6.8.10 रणे राम; D3 समाहूतः (for त्वया°).

— b) D3 त्वया प्रभो (for महा°). B1-3 Dn D3 D6.8 समाहूतस्त्वया प्रभो; D10 न युध्यस्व त्वया प्रभो.

12 a) G3 सा (for ते). — b) K1.2.5 D3 D5 यदा (for तदा). B D3 महाहवे (for °मुने). — d) B Dn D1 T G प्रतिश्रुता.

13 c) K1 (m as in text) Dn2 D3 D6.7.8.10 G3 ब्रह्मविद् (for °द्विड्). — d) T2 G1.2.3 विजे° (for हनि°).

14 G3 om. (hapl.) 14-15. — a) B3 Dn D3 D6.8.10 शरणार्थं (B3 Dn2 °र्थे) (for शरणं हि). K3 च; D5 च (for हि). — b) B Dn D3 D6.7 शरणार्थिनां; D10 शरणैषिणां; T G (G3 om.) विजयार्थिनां. — c) B (except B3) Dn D3 D6.7.10 शक्ष्यामि.

15 G3 om. 15 (cf. v.l. 14). — a) G3 यत्र (for यश्च). B2 तु (for च). B3 D (except D6.7; D3 missing) transp. क्षत्रं and कृत्स्नं. B1.4 क्षत्रं; T1 सर्वं (for कृत्स्नं). — c) K3.4 B D दृप्तात्मानं; G3 दुष्टात्मानम्. K3 D1.2 वै (for च).

16 D3 om. 16a-17b. — a) D3 (by transp.) एवं स; S स एव. — b) B3 पितामहः.

17 D3 जामदग्न्य उवाच (for राम उ°). — D3 om. 17ab (cf. v.l. 16). — c) K3 (by transp.) तथा चैव; D10 तथैवाहं. M3-5 चरि° (for करि°). — d) K3 T2 कार्यं°; D3 कार्य° (for साम्न°). T2 G1.2.3 कार्यं

कार्यमेतन्महद्ब्रह्मन्काशिकन्यामनोगतम् ।
गमिष्यामि स्वयं तत्र कन्यामादाय यत्र सः ॥ १८
यदि भीष्मो रणश्लाघी न करिष्यति मे वचः ।
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ॥ १९
न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणाम् ।
कायेषु विदितं तुभ्यं पुरा क्षत्रियसंगरे ॥ २०

भीष्म उवाच ।

एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः ।
प्रयाणाय मतिं कृत्वा समुत्तस्थौ महामनाः ॥ २१
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः ।
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ॥ २२
अभ्यगच्छत्ततो रामः सह तैर्ब्राह्मणर्षभैः ।
कुरुक्षेत्रं महाराज कन्यया सह भारत ॥ २३
न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम् ।
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ २४

इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

## १७८

भीष्म उवाच ।

ततस्तृतीये दिवसे समे देशे व्यवस्थितः ।
प्रेषयामास मे राजन्प्राप्तोऽस्मीति महाव्रतः ॥ १
तमागतमहं श्रुत्वा विषयान्तं महाबलम् ।
अभ्यगच्छं जवेनाजौ प्रीत्या तेजोनिधिं प्रभुम् ॥ २
गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः ।
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ३
स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ४
भीष्म कां बुद्धिमास्थाय काशिराजसुता त्वया । C. 5. 7054 B. 5. 178. 28 K. 5. 178. 28

---

साक्षोपलप्स्य(G5 °भ्य)ते.

18 [a]) K3 महद्विप्र; D5 D8 महाब्रह्म.. — [b]) D8 कन्याया यन्मनोगतं. — D6 om. 18[c]–19[b].

19 D6 om. 19[ab] (cf. v.l. 18). — [c]) K3 एवम्; S अहम् (for एनम्). D5 हनिष्यामि समुद्रिक्तं; D7 °ष्याम्येव सुव्यक्तं.

20 [b]) Dn1 D7 G3 कार्येषु. — [d]) D5 क्षत्रियपुंगवे; G3 °संगमे.

21 N (except K3 B3 D1.2) T1 om. the ref. — [a]) S तदा (for ततो). — [b]) D7 तैर्ब्राह्मणर्षभैः (cf. 23[b]). — [d]) K3 B D महातपाः (for °मनाः).

22 [b]) D5 अथ (for तत्र). — [c]) D5 जप्यपराः (for जप्त°). — [d]) D5 प्रतस्थुर्मे जयाशया.

23 [a]) K4 B3.5 T1 G1 अभ्यागच्छत्. M1 एवमुक्त्वा तदा रामः. — [b]) G1 समेतैर्; G2 संगतैर् (for सह तैर्). K4 B D (except D1.2) ब्रह्मवादिभिः (cf. 21[b]). — [c]) D10 समासाद्य; M1 जगामाथ (for महा°). — [d]) K3 S भार्गवः (for भारत).

24 [a]) K D2.3 न्यवसंत (for न्यवि°).

Colophon om. in Dn D4. D3.9 G4 missing. — *Sub-parvan:* K B D8 D1–3.6–8.10 G5 M अम्बोपाख्यान. — *Adhy. name:* T1 भार्गवाभियाने सरस्वतीनिवासः; G5 रामसरस्वतीतीरनिवासः; M3 रामहर्षासोनं (sic); M4.5 रामनिवासः. — *Adhy. no.* (figures, words or both): D5 (*sec. m.*) 58 (=158); T1 M4 179; T2 G1.2.5 M3.5 180; G3 177 (as in text); M1.2 178.

## 178

☞ Stanzas 1–29[ab] are missing in D4 (cf. v.l. 5. 176. 13); the MS. is mostly ignored up to the end of the lacuna.

1 [b]) B D (except D1.2.7) संविवेश (for समे देशे). — [c]) B Dn D5 D6.8 कुरु प्रियं स मे राजन्; D5 कुरुक्षेत्रमहं रा°; D10 भृगुश्रेष्ठः स मां रा°.

2 [b]) K D1–3.7.10 विषयांते. — [c]) K1–3 D5 G5 अभ्यागच्छं. — [d]) K4 B2 D1.2.7 M विभुं; D5 भृगुं.

3 [a]) K1.2 गाः (for गां). K4 गामर्घ्यं च पुरस्कृत्य.

4 [c]) K1 D5 अभि° (for प्रति°).

5 Before 5, B (except B3) Dn D5 D10 ins. राम उ°. — [b]) K4 B D (except D1.2.7) तदा (for त्वया). — [c]) B D (except D1.2.7) अकामेन (D5.6.8.10 °मैव) त्वयानीता. — [d]) G5 इदं (for एव).

C. 5. 7034
B. 5. 178. 28
K. 5. 178. 28

अकामेयमिह नीता पुनश्चैव विसर्जिता ॥ ५
विभ्रंशिता त्वया हीयं धर्मावाप्तेः परावरात् ।
परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ॥ ६
प्रत्याख्याता हि शाल्वेन त्वया नीतेति भारत ।
तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ॥ ७
स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् ।
न युक्तमवमानोऽयं कर्तुं राज्ञा त्वयानघ ॥ ८
ततस्तं नातिमनसं समुद्वीक्ष्याहमब्रुवम् ।
नाहमेनां पुनर्दद्यां भ्रात्रे ब्रह्मन्कथंचन ॥ ९
शाल्वस्याहमिति प्राह पुरा मामिह भार्गव ।
मया चैवाभ्यनुज्ञाता गता सौभपुरं प्रति ॥ १०
न भयान्नाप्यनुक्रोशान्न लोभान्नार्थकाम्यया ।
क्षत्रधर्ममहं जह्यामिति मे व्रतमाहितम् ॥ ११
अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः ।
न करिष्यसि चेदेतद्वाक्यं मे कुरुपुंगव ॥ १२
हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ १३
तमहं गीर्भिरिष्टाभिः पुनः पुनररिंदम ।
अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ १४
तमहं प्रणम्य शिरसा भूयो ब्राह्मणसत्तमम् ।
अब्रुवं कारणं किं तद्यत्त्वं योद्धुमिहेच्छसि ॥ १५
इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ १६
ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः ।

---

6 a) T1 भीष्म (for हीयं). — b) K2.5 धर्मादासेः; K8 धर्मादासे. M3–5 पुरातनात्; Ca.d.s परावरात् (as in text). B Dn Ds D3.6.8.10 धर्मादा(B8 अधर्मं)से यशस्विनी; D7 क्रोधपर्याकुलेक्षणा. — c) K1.2 परिसृष्टां. — d) K1.2.5 D7.8 कोऽन्यो नेतुम्; K3 D2 कोऽभिमंतुम्; K4 B6 D3.10 कोऽभिगंतुम्; D1 कोऽतिमंतुम्; T1 G3.5 M1 कोऽभिपत्तुम्; T2 G1.2 को हि वक्तुम्; M2 को न त्यक्तुम्; M3–5 को हि योक्तुम्.

7 a) K1.3 D1.2 S साल्वेन. — b) K5 D3 नीता हि (for नीतेति).

8 c) B1.2.4 Dn [illegible]स्त्ववमानोयं; D7 °मवमानं वै. — d) K1.2 कर्तुं राजस; K3.4 B D राज्ञां (Dn1 Ds राजन्) कर्तुं; K5 T2 G2 कर्तुं राज्ञां.

9 a) K2.4.5 B D (except D1.2.7) वै विमनसं; Ca.d.s नाति° (as in text). — b) K3–5 B5 D2.3.6.7 T2 G M3.4 समुदीक्ष्य (for °द्वीक्ष्य). A few S MSS. अब्रवं. B1–4 Dn Ds D10 उदी(Dn2 Ds D10 °द्वी)क्ष्याहमथाब्रुवं. — c) K3.4 D1.8 T1 G3 एतां; D8 पुनर् (for एनां). D8 इमां (for पुनर्). K1.2.5 गृह्य; B3 लभ्यां; D7 गृह्णां (for दद्यां). — d) K1.2.5 D7 भ्रात्रे दद्यां; B Dn Ds D6.8.10 (by transp.) ब्रह्मन्भ्रात्रे.

10 a) K3 D1 S साल्व°. K1–4 D1 ह्याह; D2 त्वाह (for प्राह). K5 शाल्वे गतमतिर्ह्यासं. — b) K4 B Dn Ds D6.8.10 एव (for इह). — d) T1 पुरा (for गता). B Dn Ds D3.6.10 इयं नगरं (for सौभ°).

11 Cf. 5. 49. 15; 89. 24; 186. 26. — a) D3 हि; G3 M [अ]स्मि (for [अ]पि). — b) K2.4 D1.7 T1 अर्थ-कारणात्; T2 G1–3 [illegible] (G1 °मतः; G3 °कृपया); Ca आत्मक न्यया; Cd as in text. B Dn Ds D3.6.8.10 नार्थलोभान्न काम्य(B8 °म)या. — c) K4 B (except B2) Dn Ds D6.10 क्षात्रं (for क्षत्र-). D7 ब्रह्मन् (for जह्याम्). — d) D7 न जह्यां (for इति मे).

12 b) = 13d, and = 1. 166. 30d; 173. 5b. K4 D2 स्मयन्निव पुरातनः (D1 °रा शनैः); T G कोपपर्या°; Ca as in text. — K3 D1 om. (hapl.) 12c–13d. — cd) D2 transp. एतद् and वाक्यं. B Dn Ds D6.8 नर° (for कुरु°).

13 K3 D1 om. 13 (cf. v.l. 12); D8 om. 13cd. — c) K1.2 संरंभतः; Ca.d as in text. — d) = 12b (cf. v.l.). T2 क्रोधसंरक्तलोचनः; G2 कोपपर्या°.

14 a) M3–5 ततोहं (for तमहं). — b) K4 B3–5 D G1 M2.5 अरिंदम. — d) K4 Ds1 D7 G1–3 चैवं. — After 14, T G M1 ins.:

577* यदा प्रयाच्यमानोऽपि प्रसादं न करोति मे ।

15 a) = Hypermetric! K3 सोहं; D1 G5 M3–5 अहं (for तमहं). D3 मूर्ध्ना वै (for शिरसा). B Dn Ds D6.8.10 प्रणम्य तमहं मूर्ध्ना. — b) K D1–3.7 भूमौ (K5 क्षितौ) (for भूयो). T2 G2.5 भूयो ब्राह्मणमुत्तमं. — c) A few MSS. अब्रवं. K3 D7 किंचिद् (for किं तद्). — d) K5 D3.10 यस्त्वं; B3 यद्वै; D6 युद्धं; D7 न त्वा (for यत्त्वं). B (except B3) Dn Ds D3.8.10 G3 युद्धम् (for योद्धुम्). B D (except D1.7.8) G3 मया (for इह). D7 उत्सहे (for इच्छसि). K3 यो[illegible] मिच्छसि येन वै.

16 b) K1.2.5 T G (except G3) त्वया चैव (for भवतैव).

17 G2 om. 17ab. — b) K3–4 D1–6.7 क्रोध(D3

जानीषे मां गुरुं भीष्म न चेमां प्रतिगृह्णसे ।
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महीपते ॥ १७
न हि ते विद्यते शान्तिरन्यथा कुरुनन्दन ।
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ।
त्वया विभ्रंशिता हीयं भर्तारं नाधिगच्छति ॥ १८
तथा ब्रुवन्तं तमहं रामं परपुरंजयम् ।
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ १९
गुरुत्वं त्वयि संप्रेक्ष्य जामदग्न्य पुरातनम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा हि पुरा मया ॥ २०
को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन्स्त्रीणां दोषान्महात्ययान् ॥ २१
न भयाद्वासवस्यापि धर्मं जह्यां महाद्युते ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु माचिरम् ॥ २२
अयं चापि विशुद्धात्मन्पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ २३
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य कार्यं भवति शासनम् ॥ २४
स त्वं गुरुरिति प्रेम्णा मया संमानितो भृशम् ।
गुरुवृत्तं न जानीषे तस्माद्योत्स्याम्यहं त्वया ॥ २५
गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः ।
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव ॥ २६
उद्यतास्त्रमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात्समरे क्रुद्धो युध्यन्तमपलायिनम् ।
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ॥ २७
क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन ।
यो यथा वर्तते यस्मिंस्तथा तस्मिन्प्रवर्तयन् ।
नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति ॥ २८
अर्थे वा यदि वा धर्मे समर्थो देशकालवित् । C. 5. 7080 B. 5. 178. 54 K. 5. 178. 54

कोप)पर्याकुलेक्षणः (= $12^{b}$, $13^{d}$). — $^{d}$) D1 चैव; D2 G3 चैनां (for चेमां). K4 प्रतिपद्यसे; D1.2 G1.5 °गृह्णसे; D7 °गृह्णसि. B (except B2) Dn Ds D3.6.8.10 गृह्णासीमां न चैव ह (D3.8 हि). — $^{f}$) B1.2.4 Dn1 D2 महामते (for मही°).

18 $^{a}$) K1-3 T1 G3.5 मे (for ते).

19 $^{c}$) T2 G1.2 मां हि (for भावि). — $^{d}$) D7 ब्रह्मन्किं वा (for ब्रह्मर्षे किं). G2 शृणोमि (for श्रमेण).

20 $^{c}$) D7 T1 G3.5 M1.2 त्वा (for त्वां). — $^{d}$) K3 D1 त्यक्तैव हि; K5 त्यक्तैवैषा (for °षा हि). B Dn Ds D6.8.10 तु (for हि). K1-3 D1 G1 M1.2 transp. पुरा and मया.

21 $^{a}$) K3 जानन् (for जातु). K1.2 परभार्यां. — $^{c}$) D8 वासयेत्स्व- (for °येत). K3 जातु (for जानन्). — $^{d}$) G3 मर्म (for दोषान्). D2 G3 दुरत्ययान्; D8 महातपाः. B1.2.4 Dn Ds D6.8.10 स्त्रीणां दोषो महात्ययः.

22 $^{b}$) B1-4 Dn Ds D3.6.8.10 महाव्रत; B5 D7 कथंचन; G3 महामते (for °द्युते). — $^{c}$) Dn1 D3.5 G5 मां (for मा). K4 D8 प्रसीद मम भद्रं ते; D7 प्रसीद त्वं मयि ब्रह्मन्.

23 $^{a}$) Ds D6.8.10 विशुद्धात्मा. — $^{b}$) K3 S (except G1 M1) पुराणः. T G M1 (*inf. lin.* as in text) महान् (for विभो). — $^{d}$) K3 गीताः श्लोकाः.

24 = (var.) Ādi, App. I, No. 81, lines 109–110; (var.) C. 12. 2053, $5294^{cd}$–$5295^{ab}$; (var.) Rām. 2. 21. 13 (Bom. ed.); (var.) Pañcatantra 1. 341. — $^{c}$) D1.7 T G M1 उत्पथं प्रति°. — $^{d}$) N परित्यागो विधीयते (K3 त्यागो भवति शासनं).

25 $^{c}$) K4 B D (except D1.2.7) गुरुवृत्तिं. — $^{d}$) K4.5 B D (except D7) वै (for [अ]हं).

26 $^{a}$) D1 G1 हन्यात्. — $^{d}$) K5 transp. एवं and क्षान्तं.

27 $^{a}$) S रणे (G2 रथे) (for अथो). — $^{c}$) K3.4 B3 D (except D8) क्रुद्धं (for क्रुद्धो). — $^{f}$) D7 इति धर्मविनिश्चयः; G5m इति धर्मविदो विदुः.

28 $^{a}$) K4 अयं धर्मः; S स्थितिर्धर्मे. — $^{b}$) K (except K4) D7 [ऽ]सि (for ऽस्मि). B4 परंतप (for तपो°). — $^{d}$) K4 B Dn Ds D6.10 तस्मिन्नेव (for तथा तस्मिन्). Dn2 प्रवर्तते; D1 S °येत् (M2 °नात्); D2 °नं; Ca.d.s as in text. D7 वर्तितव्यं तथा भवेत्. — $^{e}$) G5 स ह्यवाप्नोति (for सम°). — $^{f}$) B Dn Ds D3.6.10 न चाश्रेयश्च.

29 $^{b}$) K1.2 न नरो (for समर्थो). — D4 resumes with $29^{cd}$. — $^{c}$) B D (except D1.2.7) Ca अर्थे- (D3.4 Ca °र्थे)संशयमापन्नः; S (except G5) अनर्थे संशयापन्नः; Cd as in text. — $^{d}$) B5 D2-4 T G1.2 श्रेयो; Ca.s श्रेयान् (as in text). K4 निःश्रेयसं वचः; B Dn Ds D6.8.10 निःसंशयो (D8 °श्रेयसो) नरः; D2 T1

C. 5. 7080 B. 5. 178. 54 K. 5. 178. 54 अनर्थसंशयापन्नः श्रेयान्निःसंशयेन च ॥ २९
यस्मात्संश्रयितेऽस्मिन्ययान्यायं प्रवर्तसे ।
तस्माद्योत्स्यामि सहितस्त्वया राम महाहवे ।
पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् ॥ ३०
एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ।
तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ।
द्वंद्वे राम यथेष्टं ते सज्जो भव महामुने ॥ ३१
तत्र त्वं निहतो राम मया शरशताचितः ।
लप्स्यसे निर्जिताँल्लोकाञ्शस्त्रपूतो महारणे ॥ ३२
स गच्छ विनिवर्तस्व कुरुक्षेत्रं रणप्रिय ।
तत्रैष्यामि महाबाहो युद्धाय त्वां तपोधन ॥ ३३
अपि यत्र त्वया राम कृतं शौचं पुरा पितुः ।
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ॥ ३४
तत्र गच्छस्व राम त्वं त्वरितं युद्धदुर्मद ।
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ॥ ३५
यच्चापि कत्थसे राम बहुशः परिषत्सु वै ।
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छृणु ॥ ३६
न तदा जायते भीष्मो मद्विधः क्षत्रियोऽपि वा ।
यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् ॥ ३७
सोऽहं जातो महाबाहो भीष्मः परपुरंजयः ।
व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ३८

इति श्रीमहाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

---

M (except M4) निःसंशयो न च; D5.6 निश्चयमेति सः; G2 निःश्रेयसे न च; text as in K1-3.5 D1.7 T2 G1.3.5 M4. Ca cites (as in text) निःसंशयेन (= संशयाभावेन); Cd cites निःसंशये; Cs unintelligible, perhaps corrupt.

30 a) K1.2.5 D1.3.7 M तस्मात् (for यस्मात्). D5.6 स संशये; T1 असंशिते; Ca.s संश° (as in text). B Dn Ds D2-4.6.10 [ऽ]स्मिन्ये; D7 [ऽ]र्थे तु; D8 ह्यर्थे (for ऽर्थेऽस्मिन्). — b) B Dn Ds D2-4.6.8.10 [ऽ]यथान्यायं; D7 यथार्थे च; Ca यथान्यायं. Cn.s cite अयथान्यायं (Csp अविविच्य). D8 G1 प्रवर्तते.

31 a) T G राम; M कामं (for विप्र). — e) K3 युद्धं; D1.7 G3 द्वंद्वं; D6.8 तत्र (for द्वंद्वे). K4 B (except B3) मे; K5 D5.6 त्वं; Dn1 D6.8 तु (for ते). — f) B Dn Ds D6.8.10 सज्जीभव. K3 महामते; K4 B D (except D1.3.7) °द्युते.

32 32ab = (var.) 5. 179. 3ab. — a) M1 (inf. lin.) व्यायात् (for राम). — b) K (except K4) शरशतैश्चितः; B Dn Ds D6.8.10 °शतार्दितः; G1 °शतार्पितः; G3 शतश[ता]र्चितः; G5 [illegible]. — c) B Dn Ds D6.8.10 प्राप्स्यसे (for लप्°). — d) K (except K4) D1.3.7 शस्त्रपूतान्; Dn1 शस्त्रकृतो. D1 महाहवे; T1 महायुते; T2 G M1 मया रणे.

33 a) B3 T G संगच्छ (G3 °च्छेद्); M सहगच्छ (for स गच्छ). — b) T2 G3 कुरुक्षेत्रे. — After 33ab, S ins.:

578* समाहूय [illegible] युद्धाय त्वं तपोधन ।

— D5.6 om. 33c-34b; T2 G2.3.5 om. 33cd. — c) D7 अहं राम (for महा°). — M4 om. (hapl.) 33d-38c. — d) M1.3 [अ]हं (for त्वां). D1 परंतप (for तपो°).

34 M4 om. 34; D5.6 om. 34ab (cf. v.l. 33). — a) K1 यथा चापि; K2 M1 यत्र चापि; K3 (m as in text) यथा चापि; D7 अपि यच्च; T G1.2.5 अत्र चापि; G3 M3 अपि चापि; M2.5 अथ चापि (for अपि यत्र). — b) K1 B3 D3 त्वया पितुः; D6.8 (by transp.) पितुः पुरा. — c) G2.5 यत्र (for हत्वा). M1.2 त्वा (for त्वां).

35 M4 om. 35 (cf. v.l. 33). — a) T G (except G3) गच्छ च (for गच्छस्व). B (except B4) Dn1 तत्र राम समागच्छ; Dn2 Ds D6.8.10 तत्र राम स गच्छ त्वं. — b) K1.2.5 Dn1 D5.6 त्वरितो. K1.3.4 B3 D1.3.4.10 युद्धदुर्मदः. — c) = 38c. K1.2 अप° (for व्यप°). — d) K3 B1.2.4 Dn2 D10 ब्राह्मणं च; K4 B3.5 Dn1 D5.6 °र्णं; K5 D1.3 ब्राह्मणं ध्रुवं.

36 M4 om. 36 (cf. v.l. 33). — b) B Dn Ds D10 परिवत्सु (for °त्सु वै). — c) D5.6 सर्वे (for लोके). — d) K3 तु; K4 [ए]व (for [इ]ति). — After 36, D7 ins.:

579* अधर्मः सुमहानेष यच्छस्त्रमरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ।

37 M4 om. 37 (cf. v.l. 33). — a) B Dn Ds D1.6.8.10 जायते (for जायते). — b) B D (except D3.7) क्षत्रियो वापि (Ds D6.8.10 °योपि हि) मद्विधः. — After 37ab, B Dn Ds D1.6.8.10 ins.:

# १७९

भीष्म उवाच ।

ततो मामब्रवीद्रामः प्रहसन्निव भारत ।
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि संगरे ॥ १
अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह ।
भाषितं तत्करिष्यामि तत्रागच्छेः परंतप ॥ २
तत्र त्वां निहतं माता मया शरशताचितम् ।
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबडाशनम् ॥ ३
कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता ।
मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ४
अतदर्हा महाभागा भगीरथसुता नदी ।
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ५
एहि गच्छ मया भीष्म युद्धमद्यैव वर्तताम् ।
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ६
इति ब्रुवाणं तमहं रामं परपुरंजयम् ।
प्रणम्य शिरसा राजन्नेवमस्त्वित्यथाब्रुवम् ॥ ७
एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया ।
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ॥ ८
ततः कृतस्वस्त्ययनो मात्रा प्रत्यभिनन्दितः ।
द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ९
रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः ।
सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ १०
उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम् । C. 5. 7102 B. 5. 178. 75 K. 5. 178. 75

---

580* पश्चाज्जातानि तेजांसि तृणेषु ज्वलितं त्वया ।

Colophon om. in Dn D5.6. D5.9 G4 missing. — *Sub-parvan:* K B Ds D1.2.6–8.10 G6 M1.3–5 अंबोपाख्यान. — *Adhy. name:* G6 भीष्मरामवाक्यं; M1.2 भीष्मसंवादः; M3–5 रामवाक्यं. — *Adhy. no.* (figures, words or both): T1 M4 180; T2 G1.2.5 M3.5 181; G3 178 (as in text); M1.2 179. — *S'loka no.:* K5 41.

## 179

2 D1 om. 2$^{c}$–3$^{b}$. — $^{a}$) K1.2.5 B3 T G अहं; C8 अयं (as in text). — $^{b}$) D3.4 यथा त्वया (for त्वया सह). — $^{c}$) K3.4 B D (except D2; D1 om.) M4 ते (for तत्). — $^{d}$) K4 D3.4 तदा (for तत्र). K3 G1 गच्छेः; K4 Dn1 Ds D3.4.6 गच्छ (or आगच्छ); B Dn2 D5.10 G2 [आ]गच्छ; M3 (*inf. lin.* as in text).4.5 [आ]गच्छः (for [आ]गच्छेः).

3 D1 om. 3$^{ab}$ (cf. v.l. 2). — 3$^{ab}$ = (var.) 5. 178. 32$^{ab}$. — $^{a}$) D6 om. (hapl.) from माता up to विनिहतं in 4$^{c}$. D3.4 तात (for माता). — $^{b}$) K (except K4) शरशतैश्चितं; Dn1 °शताचितं; D3.4 °शताचितं; D2 शतशराचितं; G1 M3 शरशताचितं. — $^{d}$) MSS. (variously) °बडाशनं, °बकाशनं; °बकाशनं; °बिडाशनं. K3 कंकगृध्रविता°; D1.2.10 गृध्रकंकबडाकुलं (D2 °चितं). C8 cites बकाः, Cd बडाः.

4 D6 om. up to विनिहतं (cf. v.l. 3). — $^{a}$) T2 कृपणा. — $^{c}$) D4 om. from देवी up to सूप in 10$^{c}$. S वीर (for देवी). — $^{d}$) M3–5 जाह्नवी (for पार्थिव).

5 D4 om. 5 (cf. v.l. 4). — $^{a}$) K1.2.5 न तदर्हा. K5 G5 महाभाग. — $^{b}$) B Dn2 Ds D5.6.10 [अ]नघा (for नदी).

6 D4 om. 6 (cf. v.l. 4). — $^{a}$) D8 (by transp.) भीष्म मया गच्छ. M3.5 सार्धं (for भीष्म). — $^{b}$) K D1.2.7 कुर्मेते (for वर्तताम्). B Dn Ds D5.6.8.10 युद्धकामुक दुर्मद (cf. 5$^{d}$).

7 D4 om. 7 (cf. v.l. 4). — $^{c}$) K3 B D (except D1.2.7; D4 om.) रामं; T2 G2 देवं (for राजन्). — $^{d}$) K3 च (for [अ]थ). M अब्रवम्.

8 D4 om. 8 (cf. v.l. 4). — $^{a}$) K3.4 T1 उक्तो (for उक्त्वा). — 8$^{cd}$ = (var.) 5. 187. 12$^{cd}$. Cf. 5. 170. 22.

9 D4 om. 9 (cf. v.l. 4). — $^{b}$) K1.2.5 चाप्यभिनंदितः; B D (except D1.2.7; D4 om.) च प्रतिनंदितः.

10 D4 om. up to सूप in 10$^{c}$ (cf. v.l. 4). — $^{b}$) T2 G1.3 M3 राजितं. S (mostly) पांडरैर्. — 10$^{cd}$ = (var.) 5. 81. 18$^{ab}$. — $^{c}$) K1.2 परिस्कृतं; S (except T2) स्वव (G1 स्वप; G5 साव)स्करं (for सूप°). — $^{d}$) = 5. 81. 18$^{b}$; 138. 21$^{b}$. K1.2.4 T2 G1 °वारितं.

11 D6 om. 11$^{c}$–12$^{d}$. — $^{c}$) K1.2.5 D1.7 तं; T1 M3–5 सत् (for तत्). K5 T G भीरेण; D3.4 सूतेन; D7 शूरेण (for धीरेण). — $^{d}$) K3 Dn Ds °शस्त्र°. B3 Dn

C. 5. 7102 B. 5. 178. 75 K. 5. 176. 75 तत्कालीनेन वीरेण हयशास्त्रविदा नृप ॥ ११

युक्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा ।
दंशितः पाण्डुरेणाहं कवचेन वपुष्मता ॥ १२

पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १३

पाण्डुरैश्चामरैश्चापि वीज्यमानो नराधिप ।
शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः ॥ १४

स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात् ।
कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ ॥ १५

ते हयाश्चोदितास्तेन सूतेन परमाहवे ।
अवहन्मां भृशं राजन्मनोमारुतरंहसः ॥ १६

गत्वाहं तत्कुरुक्षेत्रं स च रामः प्रतापवान् ।
युद्धाय सहसा राजन्पराक्रान्तौ परस्परम् ॥ १७

ततः संदर्शनेऽतिष्ठं रामस्यातिमहात्मनः ।
प्रगृह्य शङ्खप्रवरं ततः प्राधममुत्तमम् ॥ १८

ततस्तत्र द्विजा राजंस्तापसा वनौकसः ।
अपश्यन्त रणं दिव्यं देवाः सर्षिगणास्तदा ॥ १९

ततो दिव्यानि माल्यानि प्रादुरासन्मुहुर्मुहुः ।
वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ २०

ततस्ते तापसाः सर्वे भार्गवस्यानुयायिनः ।
प्रेक्षकाः समपद्यन्त परिवार्य रणाजिरम् ॥ २१

ततो मामब्रवीद्देवी सर्वभूतहितैषिणी ।
माता स्वरूपिणी राजन्किमिदं ते चिकीर्षितम् ॥ २२

गत्वाहं जामदग्न्यं तं प्रयाचिष्ये कुरूद्वह ।
भीष्मेण सह मा योत्सीः शिष्येणेति पुनः पुनः ॥ २३

मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्यवभर्त्सयत् ॥ २४

किं न वै क्षत्रियहरो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्त्वं योद्धुमिच्छसि ॥ २५

ततोऽहमब्रुवं देवीमभिवाद्य कृताञ्जलिः ।

---

रणे (for नृप).

12 $D_6$ om. 12 (cf. v.l. 11). — $^{a}$) $K_4$ $D_8$ युतं; B Dn $D_5$ $D_{1.2.10}$ यत्तं (for युक्तं). $D_{3.4}$ सुखीभूतेन शिष्टेन; $D_7$ यत्तं शूरेण सूतेन. — $^{b}$) $D_5$ $G_3$ दृढकर्मणा; $D_7$ दृढ°; $D_8$ शिष्ट°. — $D_4$ om. $12^{c}$–$13^{a}$. — $^{cd}$) S (mostly) दंसितः and पांडरेण. $D_{10}$ कवचेन (for पाण्डु°), and पांडुरेण (for कव°).

13 $D_4$ om. 13 (cf. v.l. 12). — $^{a}$) Here and below S (mostly) पांडर- (for पाण्डुर-). — $^{b}$) $K_3$ प्रायां तं रथसत्तमं.

14 $^{a}$) $D_{3.4}$ transp. पाण्डुरैः and चामरैः. B (except $B_3$) Dn $D_5$ $D_{6.8.10}$ चापि व्यजनैः; $D_2$ व्यजनवॅपि (for चामरैश्चापि). $T_2$ $G_{1.2.5}$ एव (for अपि).

16 $K_4$ om. 16 (along with $15^{d}$ and $17^{a}$). — $^{a}$) $K_3$ नोदि° (for चोदि°). $K_{1.2}$ नादितास्तेन सूतेन; $G_3$ चोदितास्ते हयास्तेन. — $^{b}$) $K_{1.2}$ वीरेण (for सूतेन). — $^{c}$) M मा (for मां). $K_{1.2}$ मद्रथं (for मां भृशं). — $^{d}$) $K_{1.2}$ वाहा (for मनो-).

17 $K_4$ om. $17^{a}$ (cf. v.l. 16). — $^{a}$) $K_3$ $D_{1.2.4.7}$ चाहं (for [अ]हं तत्). $K_{1.2}$ $D_2$ च; $K_5$ M (except $M_5$) तु (for तत्). — $D_1$ om. (hapl.) $17^{d}$–$19^{a}$. — $^{d}$) $G_5$ संगतौ युद्धमेव च.

18 $D_1$ om. 18 (cf. v.l. 17). — $^{a}$) $K_5$ $B_3$ $D_5$ $D_{3.4.8.10}$ T $G_{1-3}$ M (except $M_2$) तिष्ठन्; $G_5$ तस्य (for ऽतिष्ठं). — $^{d}$) $D_7$ T G ततः प्राध्ममनुत्तमं.

19 $D_1$ om. $19^{a}$ (cf. v.l. 17). — $^{c}$) $D_5$ $D_{8.10}$ प्रापश्यंत (for अप°). — $^{d}$) $B_4$ Dn $D_5$ $D_6$ सेंद्र° (for सर्षि°). $K_{1.2.4}$ $G_3$ $M_3$ तथा (for तदा). $D_8$ देवाः सेंद्रपुरोगमाः; $D_{10}$ सेंद्रा देवगणास्तदा.

20 $^{a}$) $D_{3.4}$ ततो दिव्यविमानानि. — $^{b}$) B Dn $D_5$ $D_{6.8.10}$ ततस्ततः; $D_{3.4}$ समंततः (for मुहुर्मुहुः). — $^{d}$) $K_3$ $D_1$ $T_1$ $G_3$ हि (for ह).

22 $^{b}$) $K_3$ सदा मम हि°. — $^{c}$) K (except $K_4$) $D_5$ मातृ- (for माता).

23 $^{a}$) $K_4$ B Dn $D_5$ $D_{6.8.10}$ तु; $G_2$ $M_{3-5}$ वै (for तं). — $^{b}$) $D_{3.4}$ प्रसादिष्ये. $T_1$ $G_3$ कुरूत्तम. — $^{d}$) S मुहुर्मुहुः (for पुनः पुनः).

24 $^{a}$) $K_3$ $D_1$ $G_2$ कुरु (for पुत्र). — $^{b}$) $D_1$ पुत्र (for कुरु). $G_2$ पुत्रेण मम पार्थिव. — $^{c}$) $D_5$ रामेण (for समरे). — $^{d}$) $K_{1.2.5}$ अवभर्त्सती; $K_3$ एव भर्त्सती; $K_4$ B Dn एव भर्त्सयत्; $D_{2-4}$ $T_2$ $G_{1.2}$ $M_{3-5}$ अवभर्त्सयत्.

25 $^{a}$) $G_1$ न (for किं). $K_1$ ते; $D_5$ $D_2$ $M_1$ (*inf. lin.*) तु; $T_2$ $G_{1.2}$ तु; $G_5$ च (for न). $K_1$ न; $K_{2.3.5}$ ते; $M_4$ (*inf. lin.*) [ए]व (for वै). $K_4$ B D (except $D_{1.2}$) क्षत्रियनाशो. — $^{b}$) $K_4$ $Dn_1$ हरितुल्य°; $T_1$ हरतुल्यः पराक्रमे. — $^{c}$) $K_{1.2.5}$ $D_7$ वै (for ते). — $^{d}$) $K_{1.2.5}$

सर्वे तत्रागताः पुरा यथा च स्वयंवरे ॥ २६
यथा च रामो राजेन्द्र मया पूर्वं प्रसादितः ।
कार्यं चापि कृतं पूर्वं यथा कामः पुरातनः ॥ २७
ततः सा पुनरेवैत्य जननी मे महानदी ।
मदर्थं तमृषिं देवी क्षमयामास भार्गवम् ।
भीष्मेण सह मा योत्सीः शिष्येणेति वचोऽब्रवीत् ॥२८
स च तामाह याचन्तीं भीष्ममेव निवर्तय ।
न हि मे कुरुते काममित्यहं तमुपागमम् ॥ २९

संजय उवाच ।

ततो गङ्गा सुतस्नेहाद्भीष्मं पुनरुपागमत् ।
न चास्याः सोऽकरोद्वाक्यं क्रोधपर्याकुलेक्षणः ॥ ३०
अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः ।
आह्वयामास च पुनर्युद्धाय द्विजसत्तमः ॥ ३१

इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

## १८०

भीष्म उवाच ।

तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः ॥ १
आरोह स्यन्दनं वीर कवचं च महाभुज ।
बधान समरे राम यदि योद्धुं मयेच्छसि ॥ २
ततो मामब्रवीद्रामः स्मयमानो रणाजिरे ।
रथो मे मेदिनी भीष्म वाहा वेदाः सदश्ववत् ॥ ३
सूतो मे मातरिश्वा वै कवचं वेदमातरः ।

C. 5. 7127
B. 5. 179. 4
K. 5. 179. 4

तेन; D5.6 कथं; D7 तेन; S कुलम् (for यतम्). B Dn D8 D9.10 T G1.2.3 तं; D5.6 वै (for त्वं). K3.4 D1 यत्तं (D1 यं तं) वा निहेच्छसि.

26 a) K1 M अतवं.

27 a) G1 [आ]ह (for च). — b) K1 G6 यथा (for मया). B D (except D1.2.7) प्रचोदितः; S प्रयाचितः. — d) K4 B D (except D1.2.7) च (D8 D10 तु) या कर्म पुरातनं.

28 a) K3.4 D1.2.7 आसाद्य (for अभ्येत्य). — b) T1 G3 ह्य (for मे). — c) K D1.2.7.8 मदर्थे; G3 तमर्थे. K4 D2 गत्वा; Dn3 M4 वीक्ष्य (for देवी). — d) K (except K3) D7 [क्ष]मयामास; G3 क्षय°.

29 a) T1 यूय (for आह). — D4 om. 29c–31d. — c) K4 B3 D (except D1.2.7; D4 om.) च (for हि). G3 M3.4 से (for मे). G3 वाक्यम् (for कामम्). — d) D8 D1 तथागतम्; D7 °गतः. S कुरुष्वेत्या ......

30 D4 om. 30 (cf. v.l. 29). T2 G1.2.3 om. the ref.; the rest तेनं° उ° (resp. तेनं°). — b) T G1.2 भीष्मं (for भीष्मं). D1.2.7 अयाचमत् (for उपा°). K4 भीष्मं च पुनरागमत्. — c) D4 तैनास्याः (for न चास्याः). K4 B D (except D1.2.7) चाकरोत् (for सो°). T1 G1.2.3 तस्या अकरवं वाक्यं; T2 न तस्याकरवं वा°.

31 D4 om. 31 (cf. v.l. 29). — a) K2 सतो°; M2 दृष्टो° (for अथा°). — c) B Dn D8 D9.10 समर (for पुनर्). — d) D6.8 शिष्येण (for युद्धाय). K3.4 D1.2 मां (K4 तं) युद्धाय द्विजोत्तमः.

Colophon. D5.6 G4 missing. — *Sub-parvan:* K B Dn D8 D1–4.6–8.10 G1.3 M अंबो[पाख्यानं]. — *Adhy. name:* G1.3 रामभीष्मसंवादः; M युद्धसंवादः. — *Adhy. no.* (figures, words or both): D8 (*sec. m.*) 70 (=170); T1 G1 M4 181; T2 G2.5 M3.5 182; G3 179 (as in text); M1.2 180. — *S'loka no.:* K3 32; Dn 96.

## 180

1 D4 om. 1. — 1ab = 22cd. — a) Hypermetric! T G2 M3 om. तम्. K4 ततोऽहं वाचमानो वै; K3 वाचमिव रणेऽहं तं. — b) B प्रतिभाषं. K (except K3) व्यवस्थितः. — c) K2.3 D7 G3 M (except M1) भूमिस्थं; D1 भूमिष्ठं.

2 a) M1 (*inf. lin.* as in text).2 आरुह्य (for आरोह). — b) T2 G1.2.3 महाबाहु (for °भुज). — d) K4 D1.2 T2 G3 M1.2 इह; B3 D7 त्वम् (for मया).

3 b) D5.6 स्वर्ग° (for स्मय°). — c) G3 वाहा (for भीष्म). — d) G3 वेदाः सांगा: (for वाहा वेदाः).

4 a) B Dn D8 D5.6.8.10 च; D7 वै (for वै). M1.2 च (for वै). — b) S (except G3) वेदमातरः; Ca. d. s वेद° (as in text). — c) K3 D7 वीर (for

C. 5. 7127
B. 5. 179. 4
K. 5. 179. 4

संवीतो रथे ताभिर्योत्स्येऽहं कुरुनन्दन ॥ ४
एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः ।
शरव्रातेन महता सर्वतः पर्यवारयत् ॥ ५
ततोऽपश्यं जामदग्न्यं रथे दिव्ये व्यवस्थितम् ।
सर्वायुधधरे श्रीमत्यद्भुतोपमदर्शने ॥ ६
मनसा विहिते पुण्ये विस्तीर्णे नगरोपमे ।
दिव्याश्वयुजि संनद्धे काञ्चनेन विभूषिते ॥ ७
ध्वजेन च महाबाहो सोमालंकृतलक्ष्मणा ।
धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ॥ ८
सारथ्यं कृतवांस्तत्र युयुत्सोरकृतव्रणः ।
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ॥ ९
आह्वयानः स मां युद्धे मनो हर्षयतीव मे ।
पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः ॥ १०
तमादित्यमिवोद्यन्तमनाधृष्यं महाबलम् ।
क्षत्रियान्तकरं राममेकमेकः समासदम् ॥ ११
ततोऽहं बाणपातेषु त्रिषु वाहान्निगृह्य वै ।
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम् ॥ १२
अभ्यगच्छं तदा राममर्चिष्यन्द्विजसत्तमम् ।
अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमम् ॥ १३
योत्स्ये त्वया रणे राम विशिष्टेनाधिकेन च ।
गुरुणा धर्मशीलेन जयमाशास्स्व मे विभो ॥ १४

राम उवाच ।

एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैः सह युध्यताम् ॥ १५
शपेयं त्वां न चेदेवमागच्छेथा विशां पते ।
युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव ॥ १६
न तु ते जयमाशासे त्वां हि जेतुमहं स्थितः ।
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ १७

भीष्म उवाच ।

ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः ।

---

ताभिर्).

5 b) $T_1$ $M_{3-5}$ मा. $Ca, d, s, np$ cite सत्यविक्रमः. — d) $K_3$ B Dn $D_5$ $D_{6.10}$ $M_1$ प्रत्यवारयत्; $G_3$ $M_2$ परि°.

6 b) $K_4$ B Dn $D_5$ $D_{6.10}$ रथमध्ये (for रथे दिव्ये). — c) $K_1$ $Dn_1$ $G_3$ सर्वायुधधरं; $K_{3.4}$ B $Dn_2$ °धरे; $D_1$ °युते.

7 a) $T_2$ $G_{1.2}$ [अ]वहिते (for विहिते). — b) $G_1$ $M_5$ विस्तीर्ण°. — c) $K_{1.2}$ $D_2$ दिव्याश्वयुजि. — d) S (except $G_3$) कवचेन (for काञ्चनेन). $D_{3.4}$ [अ]भि-भूषिते (for विभू°).

8 a) $K_4$ B D (except $D_{1.2.7.8}$) कवचेन (for ध्वजेन च). — b) $K_{1-3}$ $D_1$ समलंकृतलक्ष्मणा ($K_3$ °क्ष्मणे; $D_1$ °क्षणा); B Dn $D_5$ $D_{3.4.6.8.10}$ सोमार्कलक्ष्मणा ($B_{2.3}$ $D_5$ °क्षणे; $D_{3.4}$ °क्ष्मणे); $D_2$ $G_{3,5}$ $M_2$ सोमालंकृतलक्षणे ($D_2$ °क्ष्मणे; $M_2$ °क्षणा). — $G_3$ reads 8cd after 9.

9 a) $K_{2,3}$ $D_{3.4}$ $M_2$ तस्य (for तत्र). $K_{3.4}$ $D_{1.2.7}$ सारथ्यं तस्य कृतवान्. — c) $T_1$ स तु (for सखा). — d) $K_1$ $D_2$ $G_1$ च; $D_5$ $G_5$ हि; $T_2$ $G_2$ तु (for ह). — After 9, $G_3$ reads 8cd.

10 a) $G_5$ तदा; M स मा. — c) $K_3$ $D_{6.10}$ अति-क्रोशन्; $D_3$ इति क्रो°; $T_1$ $G_5$ अनु°. — d) $D_5$ $D_{10}$ याहि याहीति; $T_1$ उपयाहि; $T_2$ $G_{1.2}$ उपयाख्यमयि; $G_4$ उपयाहो हि; $G_5$ उपायास्यां हि; M उपयाहीति.

12 b) $Dn_2$ $D_{3.4.6}$ (m as in text) ...

$D_1$ $M_2$ त्रिषु चाहं; Ca as in text. $D_{3.4}$ तु (for वै). — c) $D_{10}$ $G_3$ रथात् (for धनुर्). $D_{10}$ तूर्णं; $G_3$ तस्मात् (for न्यस्य). — d) $D_{10}$ धनुर्न्यस्य रथे तदा.

13 $D_1$ om. (hapl.) 13ab. — a) B $D_{3.4}$ अभ्यागच्छं. — b) S प्रांजलिर्मुनिसत्तमं. — c) Hypermetric! $D_2$ [अ]थ; $T_2$ च (for चैनं). — d) M अब्रवं. $D_1$ वाक्य-मुत्तमं परमं.

14 a) $G_3$ अहं योत्स्ये त्वया राम. — b) $K_4$ B Dn $Dn_2$ $D_{3.4.6.10}$ सहस्रेण; Ca. d. s विशिष्टेन (as in text). $D_{3.4}$ उत्तरेण; Ca. d. s अधिकेन (as in text). K (except $K_5$) B Dn $D_{4.7}$ वा (for च). — c) $D_{3.4}$ ब्रह्म° (for धर्म°). — d) $K_3$ मां; $M_{1.2}$ मा (for मे).

15 d) $K_4$ $D_{3.7}$ युधि (for सह).

16 a) $T_1$ $M_{1.2}$ त्वा. — c) $D_{3.4}$ च (for त्वं). $G_2$ सक्तो; $G_3$ युक्तो (for यत्तो).

17 a) $K_3$ न च; $K_3$ नतु; $T_2$ $G_{1.2.3}$ न हि (for न तु). $T_2$ $G_{1.2.3}$ केनचिद् (for ते जयम्). K (except $K_4$) $D_{1.2}$ आशासिम; $D_{3.4.6}$ M आशासे; T G आशंसे. — b) $K_{3.4}$ B D (except $D_7$) $G_2$ त्वां विजेतुम्; $G_3$ त्वामिजेतुम्. $D_{1.7.8}$ इह (for अहं). — c) $K_4$ transp. युध्यस्व and धर्मेण. — d) $D_1$ वचनेन (for चरितेन). $D_5$ च (for ते).

18 $K_{3.4}$ B D (except $D_{13}$ $D_7$) om. the ref. — a) $K_{3.4}$ $D_1$ $G_{2.3.5}$ $M_4$ प्रणम्याथ; $T_2$ ...

प्राप्नमेयं रणे संख्ये पुनरहमावि[?]पितम् ॥ १८
ततो युद्धं समभवन्मम तस्य च भारत ।
दिवसान्सुबहून्राजन्परस्परजिगीषया ॥ १९
स मे तत्राग्रतः पूर्वं प्राहरत्कङ्कपत्रिभिः ।
षष्ट्या शतैश्च नवभिः शराणामग्निवर्चसाम् ॥ २०
चत्वारस्तेन मे वाहाः सूतश्चैव विशां पते ।
प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः ॥ २१
नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यश्च भारत ।
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ॥ २२
आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि ।
भूयस्तु शृणु मे ब्रह्मन्संपदं धर्मसंग्रहे ॥ २३
ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् ।
तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् ॥ २४
प्रहरे क्षत्रधर्मस्य यं त्वं राम समास्थितः ।
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ॥ २५
पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं च मे ।
एष ते कार्मुकं वीर द्विधा कुर्मि सशायकम् ॥ २६
तस्याहं निशितं भल्लं प्राहिण्वं भरतर्षभ ।
तेनास्य धनुषः कोटिश्छिन्ना भूमिमथागमत् ॥ २७
नव चापि पृषत्कानां शतानि नतपर्वणाम् ।
प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति ॥ २८
काये विषक्तास्तु तदा वायुनाभिसमीरिताः ।
चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः ॥ २९
क्षतजोक्षितसर्वाङ्गः क्षरन्स रुधिरं व्रणैः ।
बभौ रामस्तदा राजन्मेरुर्धातूनिवोत्सृजन् ॥ ३०
हेमन्तान्तेऽशोक इव रक्तस्तबकमण्डितः ।
बभौ रामस्तदा राजन्क्वचित्किंशुकसंनिभः ॥ ३१
ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः ।

C. 5. 7155
B. 5. 179. 32
K. 5. 179. 32

— d) B (except $B_5$) D (except $D_7$) °परिष्कृतं.

20 a) $B_5$ $M_{2.3}$ मां; $Ca.d$ मे (as in text). $K_3$ समेत्य तस्मिन्पूर्वं मां. — c) $K_{1.3}$ $D_{1.7}$ $T_2$ $G_3$ M (except $M_1$) शरै° (for शतै°). $D_2$ षष्ट्या [illegible] च. — d) $M_{2.3}$ शितानाम् (for शराणाम्). B Dn Ds $D_{8.10}$ नतपर्वणां ($B_5$ °वर्चसां) (for अग्नि°).

21 a) $T_1$ चैव (for तेन). — d) S (mostly) संश्रितः.

22 a) $K_4$ $D_2$ तु (for च). — b) $K_4$ B Dn Ds $D_{4.6.8.10}$ विशेषतः; $D_1$ च मारिष (for च भारत). — $22^{cd} = 1^{ab}$. — c) Hypermetric! $M_{2.4}$ om. तम्.

23 a) $K_{1.2}$ मंत्रिता (for मानि°). — c) $K_{3.4}$ B D (for $D_{s1}$ see below) $M_{3-5}$ च (for तु). $D_{s1}$ दैवात् भूयश्च शृणु मे. — d) $G_1$ सांप्रतं; $G_3$ संवदन्; M संवादं. $Ca.d.s$ cite पदं. ❀ Ca: पदं [illegible]पदं । Cs: पदं व्यवसाये । ❀ $B_5$ धर्मविग्रहं; $D_{1.2.3}$ $Ca.d$ धर्मसंग्रहं.

24 $K_4$ om. 24. — c) B Dn Ds $D_{1.6.10}$ ते (for सु-). — $D_4$ om. $24^{c}$–$25^{d}$.

25 $D_4$ om. 25 (of v.l. 24). — a) $K_1$ प्रहारः; $K_2$ (m as in text) प्राहारं; $K_{3.4}$ B $Dn_2$ $D_{2.8}$ प्रहारे. — b) $Dn_2$ $Ds_2$ $D_{6.7}$ $M_{3-5}$ यत् (for यं). $K_3$ B Dn $D_{1.6.8.10}$ $M_4$ (sup. lin.) समाश्रितः (for °स्थितः).

26 b) K (except $K_3$) B (except $B_5$) Dn $D_7$ मम (for च मे). — c) $K_4$ $D_2$ द्रुतं (for वीर). — d) $K_{1-3.4}$ $D_7$ कुर्वे (for कुर्मि). $K_4$ $D_2$ करोमि सहसायकं; B Dn Ds $D_{3.4.6.8.10}$ छिनद्मि निशितेषुणा ($D_{3.4}$ °भिः).

27 b) B Dn Ds $D_{6.8.10}$ चिक्षेप; $D_{3.4}$ चिक्षिपं (for प्राहिण्वं). — c) K (except $K_4$) $D_7$ स च (for तेन). K B Dn Ds $D_{1.2.6-8.10}$ $G_{3.5}$ Ca कोटिं (for कोटी); $D_{3.4}$ छित्वा (for कोटिश्). — d) $K_{1.2.5}$ $D_{2.7}$ छित्वा; $T_2$ भिन्नं (for छिन्ना). $K_{1.2}$ यथागमत्; $K_3$ $D_1$ उपागमत्; $M_{2.3}$ अथास्पृशत्. B Dn Ds $D_{3.4.6.8.10}$ छित्वा ($D_{3.4}$ मध्यं) भूमावपातयं.

28 $K_4$ B Dn Ds $D_{3.4.6-8.10}$ त($D_{3.4}$ य)थैव च; $D_1$ पुनश्चापि (for नव चापि). — c) B Dn Ds $D_{6.8.10}$ चिक्षेप (for प्राहिण्वं).

29 a) $Dn_1$ $D_{10}$ निषक्तास्. — b) $K_4$ B (except $B_5$) Dn Ds $D_{6.8.10}$ वायुना समुदीरिताः. — c) $K_1$ बभुः; $K_{2.5}$ बहु; $K_4$ चेरुः; $D_7$ $G_3$ पेतुः (for चेलुः). — d) K (except $K_4$) रक्ता (for नागा). S वसुंधरां (for च ते शराः).

30 b) $K_4$ हि (for स). $K_{1.2}$ व्रणे; B Dn Ds $D_{6.10}$ $T_2$ $G_{1.2.3}$ रणे; $D_7$ व्रणात् (for व्रणैः). — c) = $31^{c}$. — d) $K_4$ B D (except $D_7$) $G_{1.2}$ धातुमान् (for धातून्). $D_1$ सृजन्; $T_1$ $G_3$ [इ]क्षरन् (for [इ]त्सृजन्).

31 c) = $30^{c}$. $K_3$ $B_{1.4.5}$ Dn $D_{1.4}$ $T_2$ $G_1$ तथा (for तदा). — d) $K_{2.3}$ किंचित्; $K_4$ $B_{4.5}$ $D_{3.4}$ फुल्ल (for क्वचित्). $B_{1-3}$ Dn Ds $D_{6.8.10}$ प्रफुल्ल इव किंशुकः.

32 b) $T_1$ कोप° (for क्रोध°). — c) $K_{3.4}$ $D_7$ समम° (for हेम°). $K_{1.2}$ तु (for सु-). $M_{3-5}$ ववर्ष च [illegible]

तिष्ठ भीष्म हतोऽसीति बाणं संधाय कार्मुके ॥ २७
स मुक्तो न्यपतत्तूर्णं पार्श्वे सव्ये महाहवे ।
येनाहं भृशसंविग्नो व्याधित इव द्रुमः ॥ २८
हत्वा वाजिनस्तता राजञ्शीघ्रास्त्रेण महाहवे ।
अवाकिरन्मां विश्रब्धो बाणैस्तैर्लोमवाहिभिः ॥ २९
ततोऽहमपि शीघ्रास्त्रं समरेऽप्रतिवारणः ।
अवासृजं महाबाहो तेऽन्तराधिष्ठिताः शराः ।
रामस्य मम चैवाशु व्योमावृत्य समन्ततः ॥ ३०
न स्म सूर्यः प्रतपति शरजालसमावृतः ।
मातरिश्वान्तरे तस्मिन्मेघरुद्ध इवानदत् ॥ ३१
ततो वायोः प्रकम्पाच्च सूर्यस्य च मरीचिभिः ।
अभितापात्स्वभावाच्च पावकः समजायत ॥ ३२
ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ।
भूमौ सर्वे तदा राजन्भस्मभूताः प्रपेदिरे ॥ ३३
तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव ।
रामः शराणां संक्रुद्धो मयि तूर्णमपातयत् ॥ ३४
ततोऽहं तानपि रणे शरैराशीविषोपमैः ।
संछिद्य भूमौ नृपतेऽपातयं पन्नगानिव ॥ ३५
एवं तदभवद्युद्धं तदा भरतसत्तम ।
संध्याकाले व्यतीते तु व्यपायात्स च मे गुरुः ॥ ३६ C. 5. 7200 B. 5. 180. 33 K. 5. 180. 38

इति श्रीमहाभारते उद्योगपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

तिष्ठ). T1 G3 तिष्ठ (for भीष्म). — D4 om. $27^{d}$–$28^{d}$.

28 D4 om. 28 (cf. v.l. 27). — a) T1 G3 M प्र(M3. 5 व्य)पतत् (for न्यप°). — b) N (except K1. 2 D7; D4 om.) M3. 5 transp. पार्श्वे and सव्ये. — c) S तेनाहं. K3 D2 समसाविद्धः; K4 B2. 3. 5 Dn D3 D1. 6. 8. 10 भृशमुद्विग्नः. — d) K3 D3 अमर्षं; D2 अग्रमं (for द्रुमः).

29 a) K4 B Dn Ds D6. 10 रामः; G1 रामं (for राजन्). — b) D3 घोरा°; T2 G2. 3 शस्त्रा° (for शीघ्रा°). — c) M (except M3) मा. K4 B Dn D1–4. 8 S (M3 sup. lin.) विस्रब्धो (T2 G3 °ब्धं). — d) D2 रामबाहुभिः; T1 G1. 2. 3 कामवर्पिभिः; T2 काहवार्पिभिः; Ca. d लोमवाहिनः; Cs as in text.

30 D4 om. $30^{abcde}$. — b) K3 D1. 2 च समंप्रति°; K4 B Dn Ds D6. 10 समरप्रति°. — d) D3 D6 Cd विष्ठिताः; Ca वेष्ठिताः (for -धिष्ठिताः). — e) D10 transp. मम and च. K1. 2. 3 D7 आसन्; S अथ (for आशु). — f) K1. 2. 3 D7 समाश्रित्य (for व्योमा°).

31 a) D2–4 प्रतपते. — b) D2 शरजालेन आवृतः. — c) B D (except D1. 2. 7) ततस् (for अन्तरे). — d) K3 B D (except D1. 2. 7) अभवत् (for अनदत्).

32 b) B Dn Ds D6. 8. 10 गभस्तिभिः (for मरी°). — c) K1. 2 D2 अभितापः; K3 G2 अभिघातात्; D1 T2 G1. 3 [...]. K4 प्रतापाच्च (for स्वभा°). B Dn Ds D3. 4. 8–9. 10 अभिघातप्रभावा(D3. 4 °तापा)च्च. — d) K1m स्वसमुत्थ्याद्; D6 M2 [...]ज्ञायत.

33 a) B2 D1. 2. 4. 6. 8. 10 सु- (for स्व-). — c) S ततो (for तदा). — d) D7 T1 भस्मीभूताः. K3 D1. 2 भस्मसात्प्रतिपेदिरे.

34 $34^{ab}$ = (var.) 1. 31. $18^{ab}$; 5. 162. $18^{ab}$. — a) K3 D1 तथा; T G (except G3) ततः (for तदा). — c) K1. 2. 3 नियुतानि; Ds1 D2 प्रयु° (for अयु°). K1. 2 च (for [अ]थ). — d) K1. 2. 3 D7 तथैव च; K3 D1. 2 च भारत (for च कौरव). — f) B1. 2. 4 Dn Ds D6. 8. 10 न्यपातयत् (for अपा°).

35 a) K1. 2 Ds2 तान्यपि; G3 (by transp.) अपि तान्. T G1. 2 M3–5 अंतरेण; G3 अथ रणे; M1. 2. 4 (inf. lin.) अंतरेषून् (for अपि रणे). G3 शीघ्रं (for रणे). — b) = 5. 180. $35^{b}$. T2 G2. 3 M1. 2 °विषोपमान्. — c) T1 G2 संभिद्य (for °छिद्य). — d) K3 D7 पतगान्; B Dn D2–4. 6 पातयेयं नगानिव.

36 a) K3 एतत् (for एवं). K3 D1 तथा; K3 अत्र (for तद्). — b) K3 पुरा; D1 महद्; G3 तथा (for तदा). K3 D2. 4 G2 भारत°. — c) G1 तदा काले (for संध्या°). G3 ह्यतीते. K2. 4 च; K3 B2 D1–4 S [ऽ]थ (for तु). — d) S समराच्च(G3 °रे ह्य; M °ये व्य)पयाद्गुरुः.

Colophon. D3. 9 G4 missing. — *Sub-parvan*: K B Dn Ds D1–4. 6–8. 10 T1 G2. 3 M अंबोपाख्यानं. — *Adhy. name*: K4 भीष्मभार्गवयोर्युद्धं; M3–5 रामसंमोहनं. — *Adhy. no.* (figures, words or both): D6 (*sec. m.*) 72 (=172); T1 M4 183; T2 84

ततः [illegible]क्तीरभ्यवमं वार[illegible]त्वाः ॥ ९
ततोऽपरा जामदग्न्यो म[illegible]त्मा
[illegible]क्तीर्घोराः प्राहि[illegible]ण्डाः ।
विचित्रिताः काञ्चनपट्टनद्धा
यथा म[illegible]ल्का ज्व[illegible] ताः ॥ १०
ताश्चा[illegible]प्यश्चर्मणा वार[illegible]त्वा
ख[illegible]नाजौ पातिता मे नरेन्द्र ।
बाणैर्दिव्यैर्जामदग्न्यस्य संख्ये
दिव्यांश्चाश्वानभ्यवर्षं ससूतान् ॥ ११
नि[illegible]कानां पन्नगानां सरूपा
दृष्ट्वा [illegible] निकृत्ताः ।
प्रादुश्चक्रे [illegible]व्यमस्त्रं महात्मा
क्रोधाविष्टो हैहयेशप्रमाथी ॥ १२
ततः श्रेण्यः शलभानामिवोग्राः
समाप[illegible]र्विशिखानां प्रदीप्ताः ।
समाचिनोच्चापि भृशं शरीरं
हयान्सूतं सरथं चैव मह्यम् ॥ १३
रथः शरैर्मे निचितः सर्वतोऽभू-
त्तथा हयाः सारथिश्चैव राजन् ।
युगं रथेषा च तथैव चक्रे
तथैवाक्षः शरकृत्तोऽथ भग्नः ॥ १४
ततस्त[illegible] व्यतीते
[illegible]घेण प्रत्यवर्षं गुरुं तम् ।
स विक्षतो मा[illegible]
देहा[illegible]जस्रं मुमुचे भूरि रक्तम् ॥ १५
यथा रामो बाणजाला[illegible]
स्तथैवाहं सुभृशं गाढ[illegible]ः ।
ततो युद्धं व्यरमच्चापरा[illegible]
भाना[illegible]स्तं प्रार्थयाने महीध्रम् ॥ १६ C. 5 7216 B. 5. 181. 16 K. 5. 181. 16

इति श्रीमहाभारते उ[illegible]पर्वणि द्व्यशीत्यधिक[illegible]ततमोऽध्यायः ॥ १८२ ॥

---

*lin.* as in text). s छित्वा (for भित्त्वा). S रामं (for राजन्). — c) T1 G2. 5 ins. तान् before द्वादशे°. — d) K4 B Dn Ds D1. 6. 10 शक्तिरभ्यधमं; T2 M °श्चाधमं.

10 a) K4 B D (except D2. 7) राजन् (for ऽपरा). — b) G3 शक्तिं घोरां. K1. 2. 5 D7 G3 प्राहिणोद्; K3. 4 B Dn Ds D1–4. 6. 8. 10 व्याक्षिपद् (for प्राक्षिपद्). B3 रुक्मदंडाः; G3 हेमदंडां. — After 10ab, K D1–4. 7. 8 ins.:

681* रूपं तासां पश्यति तत्र लोकः
सर्वास्ता वै तीक्ष्णरूपा विकोशाः ।

[ (L. 1) K4 D1. 3. 4 पश्यते; D2 ऐक्षत. — (L. 2) D2 शक्ती° (for सर्वा°). K4 D1–4 हेमदंडा (for तीक्ष्णरूपा). ] — c) D3. 4 सुविचित्राः; G3 ततो विचित्राः (for विचि°). K1. 2 कांचनबंधनद्धा; T1 G1 कांचनपट्टव(G1 °बं)द्धा. — d) K (except K4) B4 D7. 8 T G2. 5 प्रज्वलितास् (for ज्वलिता[illegible]). Ds D1. 2 तथाभाः (for तथा ताः).

11 a) D3. 4 तथास्त्वुग्राः (for ताश्चाप्यु°). M3–5 धारयित्वा (for वार°). — b) B D (except D2. 7) च [illegible] (for पातिता मे). — c) G5 M3. 5 संधे (for संख्ये). — d) K4 B D (except D2. 7) om. च.

12 b) K4 निकृत्ताः (for °कृत्ताः). — d) Ds हैमवत् (for दिव्यम्). — d) D1 S (except G1) हेहयेश°.

13 K4 om. 13abc. — a) K1. 2. 5 D7 अपि (for अति-). — d) K3 G3 ससूतं; M2 रथं (for सूतं). T G (except G1) M3–5 सारथिं (for सरथं). M1. 2 सारथिनं च (for सरथं चैव). D1 मां च; D2 मां वै (for मह्यम्).

14 K4 om. 14abc. — a) D2 om. मे. K1. 2. 5 विचितः (for नि°). D2 रथो; D3. 4 ततो (for सर्वतो). — b) B4. 5 वाहाः (for हयाः). K3 D1 चापि (for चैव). — c) K3 B1. 3–5 Dn D1. 3. 4. 7. 8. 10 M3. 4 रथेषां (for रथेषा). — d) K5 D3. 4. 7. 10 T G1–3 M [ऽ]च-; Dn2 [ऽ]प-; Ds D8 [ऽ]पि; D1 G5 वि- (for ऽथ).

15 b) K (except K4) B3 D2. 7. 8 शरौघेणाहं. K5 द्विजं (for गुरुं). — c) K3 मार्गणौघै; D1 ब्राह्मणो (for मार्गणैर्). B3 D3. 4 ब्राह्मणर्षिः; B5 शैर्महर्षिः; Ds मे महाऋषिः (for महाराशिः). — D4 om. 15d–16a. — d) K1–3. 5 D2. 7 असृक्; B Dn2 D1. 6 असक्तं; Ds असक्तं (for अजस्रं). K (except K4) D2. 7 राजन्; Ca. d रक्तं (as in text).

☞ The fragm. MS. of Devabodha's comm. ends here!

16 D4 om. 16abc (cf. v.l. 15). — a) K1. 2. 5 D7

C. 5. 7238 B. 5. 182. 21 K. 5. 182. 21 आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ २१
उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः ।
अर्कं च सहसा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ २२
ववुश्च वाताः परुषाश्चलिता च वसुंधरा ।
गृध्रा बडाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ २३
दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत् ।
अनाहता दुन्दुभयो विनेदुर्भृशनिस्वनाः ॥ २४
एतत्सर्वं महौत्पातिकं घोरमासीद्भरतसत्तम ।
विसंज्ञकल्पे धरणीं गते रामे महात्मनि ॥ २५
ततो रविर्मन्दमरीचिमण्डलो
जगामास्तं पांसुपुञ्जावगाढः ।
निशा व्यगाहत्सुखशीतमारुता
ततो युद्धं प्रत्यवहारयावः ॥ २६
एवं राजन्नवहारो बभूव
ततः पुनर्विमलेऽभूत्सुघोरम् ।
काल्यं काल्यं विंशतिं वै दिनानि
तथैव चान्यानि दिनानि त्रीणि ॥ २७

इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

21 D4 om. 21 (cf. v.l. 11). — b) D8 रामे भूमौ सहायुधे. — c) K1 (m as in text) व्योम्नि (for व्योम).

22 D4 om. 22 (cf. v.l. 11). — d) K1.2 D7 G3 M2.5 अपि सं(K1 चा)वृणोत्; G5 तमसावृणोत् (for अभि°).

23 D4 om. 23 (cf. v.l. 11). — a) D1 transp. च and वाताः; D2 transp. वाताः and परुषाः. — b) K1.2.5 D7 रूक्षाः शर्करवर्षिणः (D7 °दर्शिनः). — c) K4 वडाश्च; K5 चंडा°; B Dn D5 D2.3.8.10 T G2.3 बला°; D1 बटा°; D6 वाका°; G1 बलङ्काः; G3 M बलाश्च (for बडा°). K4 D3 काका° (for कङ्का°). — d) T1 G1 परिनेदुर्.

24 D4 om. 24 (cf. v.l. 11). — b) D2.10 आनदत्; D3 उन्नदन्. K1.2.5 D7 दारुणो बहुधानदत् (K5 °धा बहन्). — d) K5 नेदुर्वै (for विनेदुर्). K1 (before corr.) भृशदुःखिताः; D1 भूरिनिस्वनाः; G2.5 भृशनिस्वनाः. Some MSS. -निःस्वनाः.

25 D4 om. 25 (cf. v.l. 11). — a) B Dn D5 D8 सर्वम् (for घोरम्). — b) B Dn D5 D2.6.10 घोर(D10 सर्व)मासीद्भयंकरं. — After 25, D2.3 (both om. lines 3–4) S (except M1.2) ins.:

582* ततो वै लब्धसंज्ञस्तु रामो मामभ्यवर्तत ।
पुनः क्रोधेन कौरव्य विह्वलः क्रोधमूर्छितः ।
आददानो महाबाहुः कार्मुकं तालसंनिभम् ।
शरं चाप्यथ तस्मैवं मा रामेण समर्पक ।
स निवारितस्त्वथ क्रोधाविष्टोऽपि भार्गवः । [5]
कालान्तकसदृशं शरं कालानलोपमम् ।

[(L. 1) T1 G1 अभ्य° (for अभ्य°). — (L. 2) T1 G3 वत्साय (for कुरुश्च). — (L. 3) D6 कालदीप्तं; M3–5 कालसंमितं (for ताल°). — (L. 4) T2 G2.5 दैन्यं (for स्थैर्यं). D6 ततो मध्यादधदानं तं राममेव न्यवारयन्. — (L. 5) M3–5 आश्राय (for आस्थाय). D6 महर्षयः कृपायुक्ताः; D6 महर्षिः रथमास्थाय. — (L. 6) D6 स मेहरद्; M3–5 असंहरद् (for समा°). Bom. Ed. कालानलो°!]

26 D4 om. 26 (cf. v.l. 11). — a) B1.3.4 Dn2 D6 मंत्र° (for मन्द°). — b) N (mostly) पांसु- (K5 रश्मि-). K2.4 B D (except D6) -पुंजा(D1 -पूगा)-वगूढः. — c) K2.3.5 B5 D5 निशां. T2 G2 [अ]व्यगाहत. — d) K1.2 D7 ततः प्रत्यवहाराय राजन्; K5 D6 त्वयस्मवहार°; B5 D5 T1 प्रत्यव हारयाव; T2 G1 प्रत्यपहार भार्गवः; G2.5 प्रत्यप हारयावः; G3 प्रत्यवधारयाव.

27 D4 om. 27 (cf. v.l. 11). — a) G1 अपहारो; M1.2 संप्रहारो (for अव°). M4 एवं स राजन्नु विरमो बभूव. — b) M1.2 वै सुघोरः (for ऽभूत्सुघोरं). — c) K2.4 B Dn D5 D6.8–8.10 कल्यं कल्यं. Ca cites कल्यं. K (except K4) D10 T G1.2 विंशतिर्; Dn1 D3 D1.2.8 G3.5 M2.5 विंशति. G1 वाप्यहानि (for वै दिनानि). — d) K2.5 दिनानि सह; S नक्तान्यपि (for दिनानि त्रीणि). D7 त्रीण्यपराणि प्रसभं न्यवारयद् (hypermetric!).

Colophon. D4.5.6 G4 missing. — Sub-parvan: K B Dn D5 D1–3.6–8.10 T1 G5 M अम्बोपाख्यानं. — Adhy. name: K4 भीष्मयुद्धं. — Adhy. no. (figures, words or both): D6 73 (=173); T1 M4 185; T2 G1.2.5 M2.5 186; G3 183 (as in text); M1.2 184. — S'loka no.: K4 29; Dn 43.

# १८४

भीष्म उवाच ।
ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा ।
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः ॥ १
नक्तंचराणां भूतानां रजन्याश्च विशां पते ।
शयनं प्राप्य रहिते मनसा समचिन्तयम् ॥ २
जामदग्न्येन मे युद्धमिदं परमदारुणम् ।
अहानि सुबहून्यद्य वर्तते सुमहात्ययम् ॥ ३
न च रामं महावीर्यं शक्नोमि रणमूर्धनि ।
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ४
यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान् ।
दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ॥ ५
ततोऽहं निशि राजेन्द्र प्रसुप्तः शरविक्षतः ।
दक्षिणेनैव पार्श्वेन प्रभातसमये इव ॥ ६
ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात् ।
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ॥ ७
त एव मां महाराज स्वप्नदर्शनमेत्य वै ।
परिवार्याब्रुवन्वाक्यं तन्निबोध कुरूद्वह ॥ ८
उत्तिष्ठ मा भैर्गाङ्गेय भयं ते नास्ति किंचन ।
रक्षामहे नरव्याघ्र स्वशरीरं हि नो भवान् ॥ ९
न त्वां रामो रणे जेता जामदग्न्यः कथंचन ।
त्वमेव समरे रामं विजेता भरतर्षभ ॥ १०
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान् ।
विदितं हि तवाप्येतत्पूर्वस्मिन्देहधारणे ॥ ११
प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत ।
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्क्वचित् ॥ १२
तत्स्मरस्व महाबाहो भृशं संयोजयस्व च ।
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप ॥ १३
एनसा च न योगं त्वं प्राप्स्यसे जातु मानद । C. 5. 7202 B. 5. 183. K. 5. 183 1

---

## 184

☞ D4 om. this adhy. (cf. v.l. 5. 183. 11); the MS. is mostly ignored here.

1 $^{d}$) B3 देवानां चैव भारत.

2 $^{b}$) K4.5 D5 G3 M2.3.5 राजन्यांश्च (M2 °न्यां च); B1.2.4.5 Dn2 D8 राजन्यानां; B3 D2.7 M1 रजन्यां च; Dn1 राजन्यानां; D1 रजन्यांश्च; T1 G1 जनन्याश्च (for रज°). — K1.2.3 om. $2^{cd}$. — $^{d}$) T1 G1 M (except M4) °मचिन्तयं (for सम°).

3 $^{c}$) K4.5 B D (except D2.8; D4 om.) च (for सु-).

4 $^{c}$) G1 विप्रं विजेतुं समरे.

5 G3 om. $5^{ab}$. — $^{d}$) K3 Dn1 G3 निशा; Cn निशां (as in text). T1 G1 M1.2 इमां (for मम).

6 $^{a}$) B2.3 Dn D5 D8.10 निशि च (for ऽहं निशि). — $^{c}$) K4.5 B D (except D7; D4 om.) G1 इह (for एव). — $^{d}$) K1.2.3 यथा; B3 Dn D5 D1.2.6–8.10 तदा; D3 G3 नृप; T G1.2 सम (for इव).

7 $^{b}$) D8 अहं (for अस्मि). D1 पतितो रथं (for पतितो रथात्).

9 $^{b}$) K4 B Dn D5 D8.10 न भयं तेऽस्ति (for भयं ते नास्ति). D3 न भयं ते कथंचन; D6 न भयं तेऽस्ति किंचन. — $^{c}$) K3.4 B D (except D7; D4 om.) त्वां कौरव्य (for नर°).

10 $^{a}$) K5 D3 G2.3 M (except M1) त्वा. — $^{b}$) K3 D1.2 प्रतापवान् (for कथं°). — $^{c}$) T2 G2.3 राजन् (for रामं). — $^{d}$) T2 G2.3 गुरुसत्तमं (for भरत°).

11 D8 T G ins. after $11^{ab}$: B4 (om. line 2) D3, after $13^{ab}$:

583* [illegible]स्वापं राजेन्द्र स्वयमेव तवानघ ।
येन शत्रून्महावीर्यान्प्रशासिष्यसि कौरव ।

[(L. 2) G3 स्वांश्च (for येन). D8.3 सर्वान् (for शत्रून्).]

12 $^{b}$) K1.2 स्वापनं (for प्रस्वापं). K3.4 D1.2 नामतः (for भारत). — $^{c}$) D3 हि (for ऽपि). — $^{d}$) D3 न पृथिव्यां (for पृथिव्यां वा). M पुनः (for पुमान्).

13 B5 om. $13^{a}$–$14^{d}$. — $^{a}$) M3–5 तं (for तत्). K2 (by corr.) Ds2 संस्मर (for स्मरस्व). — $^{b}$) T G तु (for च). — After $13^{ab}$, B4 (om. line 2) D3 ins. 583*. — $^{c}$) K4 नैव; B3 स च; T2 G3 स तु; G1.2.3 न तु (for न च).

14 B5 om. 14 (cf. v.l. 13). — $^{a}$) T G अयसा (for ए°). K B3 D1–3.7 M5 न च (by transp.); B1.2.4 Dn D6.8.10 न तु; D3 तु न; T1 [स]पि न.

[illegible] लेलिहानां समन्ततः ॥ ५
ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।
सा मामभ्यहनत्तूर्णमंसदेशे च भारत ॥ ६
अथाहमसृक्प्रवरं गिरिर्गैरिकधातुवान् ।
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ७
ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः ।
प्रेषयं मृत्युसंकाशं बाणं सर्पविषोपमम् ॥ ८
स तेनाभिहतो वीरो ललाटे द्विजसत्तमः ।
अशोभत महाराज सशृङ्ग इव पर्वतः ॥ ९
स संरब्धः समावृत्य बाणं कालान्तकोपमम् ।
संदधे बलवत्कृष्य घोरं शत्रुनिबर्हणम् ॥ १०
स वक्षसि पपातोग्रः शरो व्याल इव श्वसन् ।
महीं राजंस्ततश्चाहमगच्छं रुधिराविलः ॥ ११
अवाप्य तु पुनः संज्ञां जामदग्न्याय धीमते ।
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥ १२
सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे ।
विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् ॥ १३
तत एनं परिष्वज्य सखा विप्रो महातपाः ।
अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा ॥ १४
समाश्वस्तस्तदा रामः क्रोधामर्षसमन्वितः ।
प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः ॥ १५
ततस्तत्प्रतिघातार्थं ब्राह्ममेवाहमुत्तमम् ।
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् ॥ १६
तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः ।
असंप्राप्यैव रामं च मां च भारतसत्तम ॥ १७
ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलम् ।
भूतानि चैव सर्वाणि जग्मुरार्तिं विशां पते ॥ १८
ऋषयश्च सगन्धर्वा देवताश्चैव भारत ।
संतापं परमं जग्मुरस्त्रतेजोभिपीडिताः ॥ १९
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।    C. 5. 7286 B. 5. 184. [illegible] K. 5. 184. [illegible]

---

6 a) K3 शकिद् (for ततो). — c) D7 T1 G3.5 M3–5 स (for सा). K4 B Dn Ds D2.6.10 अभ्यवधीत् (for °हनत्). — d) K4 B (except B4) Dn Ds D2.8.10 जत्रुदेशे; Ca अंस° (as in text). K2.4 D1 सुवाक्यं (K3 °णः); B Dn Ds D2.6.8.10 कुरूद्वह; D2 नरर्षभ (for च भारत).

7 a) K2.4 D1.8 ततो; D3 यथा; T1 तथा (for अथ). K1.2 Dn D6.7.10 असृग्; B3 D1–3 G2 Cn अजस्रम् (for असृक्प्रवरं). K3 अवहद्; B4 D7 S (except G3) अभवद् (for अजवद्). — b) K4.5 Dn2 Ds2 D1.8.10 गिरि गैरिक°. — d) K2.5 क्षतलक्षणः; K3 M2.3 °जेक्षणः; B3 Ca °ओक्षितः; D1 °जेक्षणैः; M3 °ओक्षिणः. D6.8 क्षतजास्य क्षतेक्षणः.

8 b) S (except G3) कोप° (for क्रोध°). — c) K2.4 D2 प्राहिण्वं; K3 D7 प्रेषयत्; B Dn Ds D6.8.10 चिक्षेप; D2 प्रसृजं; D3 व्यक्षिपं (for प्रेषयं). — d) D3 D6 शुचि (for बाणं).

9 a) D6 भि° (for [अ]भि°). K1.2.4 G3 M (except M3) वीर.

10 a) K2 D1 M3 सु- (for स). — b) K4 B D (except D2.3.7; D4 om.) शरं (for बाणं). — c) T2 G3 संधाय (for °दधे). D2 संदधे भुजमाकृष्य.

11 d) B2.3 Dn Ds D2.10 अवशं. K2.4 B1.2.4 D1–3 रुधिरोक्षितः; T2 G2 °राक्षयः.

12 a) K4 B D (except D1.2.7; D4 om.) संप्राप्य (for अवाप्य). K3 T1 G3 च (for तु). — c) T G विपुलां (for विमलां). — d) B2 उरगीम् (for अशनीम्).

13 a) K1.2.5 D7 काकसंस्पर्शा (for द्विज°). — b) D1 स्तनांतरे (for भुजा°). — c) G3 स विह्वलो° (for विह्वलश्चा°).

14 a) K1.2.3 तमेनं सं(K3 स)परि°. — b) D3 वीरो (for विप्रो). M महामनाः. — c) Hypermetric! — d) S (except G1.5) आश्वासयत नै(M1.2.4 ने)कधा.

15 a) K1.2 समाश्वसन्. K3.4 B1–3 D (except D2.7; D4 om.) M1.2 ततो (for तदा). — c) M3 ततो (for तदा).

16 d) K1 (before corr.).2 B2 D3 D2.8.8 T G3 दर्शयन्.

17 a) D7 G2.3 M3.5 ततो; M1.2 तदा (for तयोर्). T G राजन् (for आसीद्). — b) T G1.2.5 अंतरे वै; G3 अंतराळे (for अन्तरा वै). M4.5 से (for वै). — d) K3 D7.8 G3 भरतसत्तम. K1 B2.4.5 मां चैव भरतर्षभ.

19 a) K1 तु (for च). D3 D3 [ए]व (for स-). B4 सदेवासुरगंधर्वाः. — d) B2 °निपातितः; D1–3 G1.2 °निपीडिताः.

20 a) D2 वसुधा (for पृथिवी). — c) K1.2.4 Dn1

C. 5. 7286 B. 5. 184. 20 K. 5. 184. 20 संत्रस्तानि च भूतानि विषादं जग्मुरुत्तमम् ॥ २०
प्रजज्वाल नभो राजन्धूमायन्त दिशो दश ।
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा ॥ २१
ततो हाहाकृतं लोके सदेवासुरराक्षसे ।
इदमन्तरमित्येव योक्तुकामोऽस्मि भारत ॥ २२
प्रस्वापमस्त्रं दयितं वचनाद्ब्रह्मवादिनाम् ।
चिन्तितं च तदस्त्रं मे मनसि प्रत्यभात्तदा ॥ २३

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

## १८६

भीष्म उवाच ।
ततो हलहलाशब्दो दिवि राजन्महानभूत् ।
प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन ॥ १
अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दन ।
प्रस्वापं मां प्रयुञ्जानं नारदो वाक्यमब्रवीत् ॥ २
एते वियति कौरव्य दिवि देवगणाः स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ॥ ३
रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यावमानं कौरव्य मा स्म कार्षीः कथंचन ॥ ४
ततोऽपश्यं दिविष्ठान्वै तानष्टौ ब्रह्मवादिनः ।
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ॥ ५
यथाह भरतश्रेष्ठ नारदस्तत्तथा कुरु ।
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ६
ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं मृधे ।

---

$D_7$ संत्रस्तानि; $D_1$ समस्ता° (for संत्रस्ता°).

21 $^a$) $K_3$ ततो वह्निर् (for नभो राजन्). $K_{1.3.5}$ $D_7$ प्राज्वलत्पावकः सर्वः. — $^b$) $K_{1.3.5}$ $Dn_1$ $Ds_2$ $D_2$ धूमायंत ($K_3$ °ञ); $K_4$ S धूमा($G_3$ $M_{2.3}$ °म)यंति. — $^d$) $K_{1-3}$ $D_7$ $T_2$ G (except $G_3$) $M_{1.2}$ तथा (for तदा).

22 $K_1$ om. from 22 up to $9^{ab}$ of the next adhy. (186). — $^b$) $D_{7.10}$ °मानुषे. — $^c$) =(var.)1. 51. 16$^c$. $K_{3-4}$ B Dn $D_{6.8}$ हृतेवं. — $^d$) K ($K_1$ om.) B Dn $D_3$ $D_{3.6.8.10}$ $G_3$ $M_1$ (*inf. lin.*) मोक्तु° (for योक्तु°).

23 $K_1$ om. 23 (cf. v.l. 22). — $^a$) N ($K_1$ om.; $D_4$ missing) त्वरितो (for दयितं). — $^c$) $K_2$ चिन्तितं; $K_4$ B Dn $D_3$ $D_{6.10}$ $G_3$ विचित्रं च (for चिन्तितं च). — $^d$) $K_{3.5}$ $D_7$ T G (except $G_5$) $M_{3.5}$ मनसा; $D_1$ सहसा; $M_1$ वचनात्; $M_2$ वचनं (for मनसि). $G_3$ संस्मरत् (for प्रत्यभात्).

Colophon om. in $K_1$. $D_{4.5.9}$ $G_4$ missing. — *Sub-parvan:* $K_{3-5}$ B Dn $D_3$ $D_{1-3.5-8.10}$ $G_3$ M अंबोपाख्यान. — *Adhy. name:* $K_4$ भीष्मभार्गवयो°र्युद्धं; M ... — *Adhy. no.* (figures, words or both): $D_6$ 75 (=175); $T_1$ $M_4$ 187; $T_2$ $G_{1.2.5}$ $M_{2.3}$ 188; $G_3$ 185 (as in text); $M_{1.5}$ 186. — *S'loka no.:* $K_5$ 23; Dn 24.

**186**

1 $K_1$ om. $1^a$–$9^b$; $D_4$ om. 1–3 (cf. v.l. 5. 185. 22; 183. 11). — $^b$) $K_3$ अभूत्तदा (for महानभूत्). — $^c$) $T_2$ $G_2$ $M_2$ भीष्ममस्राक्षीः. $K_5$ $D_{10}$ $G_3$ स्माक्षीर्; $B_3$ स्वाक्षीर्; $D_1$ द्राक्षीर् (for स्राक्षीर्).

2 $K_1$ $D_4$ om. 2 (cf. v.l. 1); $B_2$ $D_2$ om. $2^{ab}$. — $^a$) $K_4$ प्रयुंजन्नेव; $B_3$ अयुंचमेव; $B_{4.5}$ प्रयुंजमेव; $D_1$ युयुज°. $K_{3.5}$ $D_7$ अयुंजं ($K_3$ असृजं) चवमेवा°. — $^c$) $K_{3.4.5}$ $D_3$ वीर मा स्वा($K_5$ स्मा)क्षीः; $K_3$ अथ मा स्वाक्षीः; $B_{1.2.4}$ समरे वीर; $D_{1.2}$ भीष्म मा द्रा($D_2$ स्वा)क्षीः; S अथ मां वीर (for मां प्रयुञ्जानं).

3 $K_1$ $D_4$ om. 3 (cf. v.l. 1). — $^b$) $T_2$ $G_2$ देव- (for दिवि). $M_2$ हिताः (for स्थिताः). — $^c$) $D_6$ S (except $T_2$ $G_{1.2}$) त्वा (for त्वां). — $^d$) S प्रयुञ्जथाः (for प्रयो°).

4 $D_4$ resumes! $K_1$ om. 4 (cf. v.l. 1). — $^c$) $K_{3.5}$ $D_{3.4}$ तस्यापमानं.

5 $K_1$ om. 5 (cf. v.l. 1). — $^a$) $K_{2.3.5}$ $B_3$ $D_{3.4.8}$ M दिविस्थानन्व. — $^c$) $D_{7.8}$ मा (for मां).

6 $K_1$ om. 6 (cf. v.l. 1). — $^a$) $K_5$ $T_1$ $G_3$ $M_3$ यदा° (for यथा°). — $^b$) $K_4$ D (except $D_{1.2.7}$) हि; $B_{3.4.5}$ त्वं (for तत्). — $^d$) $M_{1.2}$ ... (for भरत°).

ब्रह्मास्त्रं [illegible] यथाविधि ॥ ७

ततो रामो रुषितो राजपुत्र
दृष्ट्वा तदस्त्रं विनिवर्तितं वै ।
जितोऽस्मि भीष्मेण सुमन्दबुद्धि-
रित्येव वाक्यं सहसा व्यमुञ्चत् ॥ ८

ततोऽपश्यत्पितरं जामदग्न्यः
पितुस्तथा पितरं तस्य चान्यम् ।
त एवैनं संपरिवार्य तस्थु-
रूचुश्चैनं सान्त्वपूर्वं तदानीम् ॥ ९

मा स्मैवं साहसं वत्स पुनः कार्षीः कथंचन ।
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ १०
क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन ।
स्वाध्यायो व्रतचर्या च ब्राह्मणानां परं धनम् ॥ ११
इदं निमित्ते कस्मिंश्चिदस्माभिरुपमन्त्रितः ।
शस्त्रधारणमत्युग्रं तच्च कार्यं कृतं त्वया ॥ १२
वत्स पर्याप्तमेतावद्भीष्मेण सह संयुगे ।
विमर्दस्ते महाबाहो व्यपयाहि रणादितः ॥ १३
पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम् ।
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव ॥ १४
एष भीष्मः शांतनवो देवैः सर्वैर्निवारितः ।
निवर्तस्व रणादस्मादिति चैव प्रचोदितः ॥ १५
रामेण सह मा योत्सीर्गुरुणेति पुनः पुनः ।
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ।
मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे ॥ १६ C. 5. 7309 B. 5. 185. 17 K. 5. 185. 17

7 $K_1$ om. 7 (cf. v.l. 1); $G_3$ om. 7–8. — $^a$) $K_4$ ततोऽहं; $K_5$ ततोसौ; $D_{1.7}$ S ($G_3$ om.) ततोहं. $K_3$ प्रतिसंगृह्य; S ($G_3$ om.) परिसंहृत्य ($M_{3-5}$ °गृह्य). — $K_4$ om. $7^b$–$8^a$. — $^b$) $K_2$ $B_{1.2.4.5}$ $D_{3.4}$ विभो; $B_3$ Dn $D_5$ $D_{6.8.10}$ महत् (for मृधे). — $^d$) $G_5$ $M_1$ (*inf. lin.* as in text).5 युद्धे (for युधि).

8 $K_1$ $G_3$ om. 8 (cf. v.l. 1, 7); $K_4$ om. $8^a$ (cf. v.l. 7). — $^a$) Dn [ऽ]थ रामो (for रामो)! $K_3$ भगवान्; $B_4$ (and many old printed ed.!) हृषितो (for रुषितो). B Dn $D_5$ $D_{6.8.10}$ राजसिंह (for °पुत्र). — $^b$) $K_{3.4}$ $D_{1.7}$ प्रतिसंहृतं (for विनि°). $K_{2.3.5}$ $D_{1-4.7}$ से; $M_2$ च (for वै). — $^c$) $D_5$ $D_6$ हतोसि; $D_{3.4.7.8}$ जितोसि (for जितोऽस्मि). $D_5$ $D_{3.4.7}$ भीष्मेति (for °ण). — $^d$) $K_3$ $Dn_1$ S ($G_3$ om.) एवं (for इत्येवं). $D_7$ अभ्यबोचत्; T G ($G_3$ om.) चाप्यमुञ्चत्; $M_1$ स (*inf. lin.* च) व्यमु°; $M_2$ [ए]वाभ्यमु°; $M_{3-5}$ प्रत्यमु° (for व्यमु°).

9 $K_1$ om. $9^{ab}$ (cf. v.l. 1). — $^b$) $B_3$ Dn $D_5$ $D_{6.10}$ $M_2$ चास्य (for तस्य). $K_4$ $D_5$ वाक्यं; B (except $B_3$) चापि; Dn भाग्यं (Bom. ed. भाग्यं!); $D_2$ T $G_{1.2.5}$ M चान्यान् (for चान्यम्). — $^c$) $K_4$ $B_{3.5}$ Dn $D_5$ $D_{3.4.6.8.10}$ ते तत्र चै(Dn₁ वै)नं; $B_{1.2.3}$ ततश्चैनं ते; $D_1$ तत एनं स; $G_3$ स एवैनं सं-; $G_5$ तथैवैनं सं- (for स एवैनं सं-).

10 Before 10, all MSS. ins. पितर ऊचुः. — $^a$) $K_3$ B D (except $D_{1.2.7}$) तात (for वत्स). — $^c$) $K_{1.2}$ संयुगे; $T_2$ संगरं.

11 $^a$) $K_{1.2.5}$ च; $K_3$ $D_{1.2.7}$ हि (for तु). — $^b$) $K_{1.2.5}$ $B_{2.5}$ ब्रह्मचर्यं; $K_3$ $B_{1.4}$ व्रतचर्यं; $B_3$ $D_{1.2.7}$ ब्रह्मचर्या. $K_4$ $Dn_2$ $Ds_1$ [अ]थ (for च). — $^d$) $K_5$ $D_5$ ब्राह्मणस्य. $B_3$ $D_1$ परं तपः ($D_1$ °प); $B_5$ परं बलं.

12 $^a$) $K_{1.2.5}$ (hypermetric!) तदिदं (for इदं). $T_2$ $G_2$ निमित्तं; Ca as in text. $G_3$ तदिदं वीर ते कर्म. — $^b$) $K_1$ अभिमंत्रितं; $K_3$ उपमंत्रितः; B Dn $D_5$ $D_{3.4.6.8.10}$ प्रागुदाहृतं; $D_1$ उपयंति तं; $Ca._5$ as in text. — $^c$) $D_5$ अस्त्र° (for शस्त्र°). $K_{1.5}$ $D_{3.4.8}$ M उग्रत्वं; $D_2$ T G उग्रं च (for अत्युग्रं). — $^d$) B (except $B_3$) Dn $D_{3.4.6}$ [अ]कार्यं (for कार्यं).

13 $^a$) $M_{1-3}$ एवैतद् (for एतावद्). — $^b$) $K_3$ त्वया भीष्मेण संयुगे. — $^c$) K (except $K_4$) $D_5$ निवर्तस्व (for विमर्दस्ते).

14 $D_2$ om. (hapl.) $14^a$–$15^c$. — $^a$) $D_{3.4}$ एव (for एतद्). — $^b$) $G_5$ तदिदं शस्त्रधारणं. — $^c$) $T_1$ इदं; $T_2$ $G_{1-3}$ एनं (for एतद्). $B_3$ $D_7$ $G_{1.2}$ दुर्धर्षं. — $^d$) $M_{3-5}$ तप्स्यस्व.

15 $D_2$ om. $15^{abc}$ (cf. v.l. 14). — $^a$) T G (except $G_3$) एवं (for एष). — $^b$) $K_{1.2.5}$ निवर्तितः; $B_3$ निराकृतः (for निवा°). — $D_1$ om. (hapl.) $15^{cd}$. — $^d$) $K_5$ प्रणोदितः; $B_{3.5}$ Dn $D_5$ $D_{6.8.10}$ प्रसा° (for प्रचो°).

16 $K_5$ reads 16–17 after $24^{ab}$. — $^a$) $K_5$ निवर्तस्व (for गुरुणेति). $D_1$ विशेषतः (for पुनः पुनः). — $^c$) $T_1$ $G_{1.3}$ रामं. — $^d$) $K_{2.5}$ $D_7$ $T_1$ $G_1$ $M_{3-5}$ न्याय्यं; $K_3$ नाथ; $D_1$ $T_2$ $G_2$° न्याय्यं; $D_{3.4}$ $G_3$ शक्यः; $G_3$ नाथ

C. 5. 7331
B. 5. 186. 4
K. 5. 186. 4
निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ४

भीष्म उवाच ।

एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः ।
तूष्णीमासीत्तदा कन्या प्रोवाच भृगुनन्दनम् ॥ ५
भगवन्नेवमेवैतद्यथाह भगवांस्तथा ।
अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ॥ ६
यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया ।
अनिवार्य रणे वीर्यमस्त्राणि विविधानि च ॥ ७
न चैष शक्यते युद्धे विशेषयितुमन्ततः ।
न चाहमेनं यास्यामि पुनर्भीष्मं कथंचन ॥ ८
गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन ।
समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ९
एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तपसे धृतसंकल्पा मम चिन्तयती वधम् ॥ १०
ततो महेन्द्रं सह तैर्मुनिभिर्भृगुसत्तमः ।
यथागतं ययौ रामो मामामन्त्र्य भारत ॥ ११
ततोऽहं रथमारुह्य स्तूयमानो द्विजातिभिः ।
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ।
यथावृत्तं महाराज सा च मां प्रत्यनन्दत ॥ १२
पुरुषांश्चादिशं प्राज्ञान्कन्यावृत्तान्तकर्मणि ।
दिवसे दिवसे ह्यस्या गतजल्पितचेष्टितम् ।
प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते मम ॥ १३
यदैव हि वनं प्रायात्कन्या सा तपसे धृता ।
तदैव व्यथितो दीनो गतचेता इवाभवम् ॥ १४
न हि मां क्षत्रियः कश्चिद्वीर्येण विजयद्युधि ।
ऋते ब्रह्मविदस्तात तपसा संशितव्रतात् ॥ १५

---

प्रमुञ्चता).

5 $K_{3.4}$ B D (except $D_{4.7.8}$) S om. the ref. — $^{a}$) $K_{1.2.5}$ $G_{3}$ $M_{1.2}$ तदा (for ततो). — $^{b}$) $K_{1.4}$ Dn $D_{5}$ $D_{8}$ $T_{1}$ $G_{5}$ M विनिश्वस्य; $D_{1}$ निःश्वसंश्च; $T_{2}$ $G_{2}$ विनिश्वस्य. $K_{3}$ $D_{7}$ निःश्वस्य [illegible]. — $^{c}$) $K_{3.4}$ B D (except $D_{7}$) ततः (for तदा).

6 $^{b}$) $G_{3}$ $M_{1.2}$ वदा (for यथा). $D_{5}$ $D_{8}$ $M_{3-5}$ [आ]त्थ (for [आ]ह). K (except $K_{3}$) $D_{2}$ यथात्थ न तदन्यथा; $D_{3.4}$ यथा चाह भवांस्तथा. — $D_{6}$ om. 6$^{c}$–7$^{b}$. — $^{d}$) $K_{2.5}$ उदायुधैः (for °रधीः).

7 $D_{6}$ om. 7$^{ab}$ (cf. v.l. 6); $G_{5}$ om. (hapl.) 7$^{b}$–9$^{a}$. — $^{c}$) $K_{1}$ $D_{2}$ अभिधाय; $K_{2.3.5}$ [illegible]; $K_{4}$ B Dn $D_{5}$ $D_{1.3.4.6.8.10}$ अनिवार्यं; $D_{7}$ अपिधाय; T G युधि° (for अनि°).

8 $D_{3.4}$ $G_{5}$ om. 8 (for $G_{5}$ cf. v.l. 7). — $^{a}$) $K_{4.5}$ B (except $B_{2}$) Dn $D_{5}$ $D_{2}$ एव (for एष). — $^{c}$) $B_{4}$ पश्यामि; $D_{7}$ $T_{2}$ $G_{1.2}$ योत्स्या° (for यास्या°). — $^{d}$) $K_{3}$ $B_{1.2.4}$ कदाचन; $K_{4}$ तपोधन (for कथं°).

9 $G_{5}$ om. 9$^{a}$ (cf. v.l. 7). — $K_{4}$ om. (hapl.) 9$^{ab}$. — $^{a}$) $K_{3}$ $G_{3}$ [इ]ति तत्राहं; $B_{1-3}$ च तत्राहं; $B_{4}$ तत्र चाहं. — $^{d}$) $D_{3}$ $G_{3}$ कुरूद्वहं (for भृगू°).

10 $D_{4}$ om. 10$^{a}$–11$^{b}$. — $^{b}$) $K_{2}$ °व्या[illegible]लोचना. $M_{1.2}$ °पर्या[illegible]क्षणा. — $^{c}$) B Dn $D_{5}$ $D_{6.10}$ तापस्ये; $D_{1}$ तापसे; $D_{2}$ तपसे; $G_{2}$ समरे. — $^{d}$) $B_{4}$ Dn $D_{6.8.10}$ सा से (for मम). $T_{1}$ $G_{1}$ चितयंती वधं मम.

11 $D_{2}$ om. 11$^{ab}$ (cf. v.l. 10). — $^{a}$) B $Dn_{2}$ $D_{8}$ $D_{1.10}$ $G_{3}$ सहितैः; $D_{6}$ सहिते (for सह तैः). — $^{b}$) $K_{4}$ ऋषिभिर्. $K_{1-3}$ $B_{2}$ $D_{1-3.8}$ $T_{1}$ $M_{1.2}$ भृगुनंदनः (for °सत्तमः). — $^{c}$) B Dn $D_{5}$ $D_{6.10}$ तथा सोगान् (for ययौ रामो). — $^{d}$) $K_{3}$ $D_{1.2}$ °पृच्छ्य (for °मन्त्र्य).

12 $^{a}$) $K_{4}$ B D (except $D_{1.7}$) ततो रथं समारुह्य. — $^{cd}$) = (var.) 5. 179. 10$^{cd}$. — $^{e}$) $B_{5}$ °पृष्टं (for °वृत्तं). — $^{f}$) $K_{3}$ M भ्रा. $T_{2}$ नारदेन निवेदितं.

13 $T_{2}$ om. 13$^{a}$–16$^{b}$. — $^{a}$) $K_{1.2}$ तज्ज्ञान्; $D_{3.4}$ सर्वान्; Ca प्राज्ञान् (as in text). — $^{c}$) K (except $K_{4}$) $D_{2.7.8}$ तस्या (for ह्यस्या). — $^{d}$) $K_{1.2}$ B (except $B_{3}$) $Dn_{1}$ $D_{1}$ गतिजल्पित°; $K_{4.5}$ $Dn_{2}$ $D_{8}$ गतं जल्पित°; $D_{3.4}$ गत्वा आनीय चेष्टितं; $D_{10}$ कन्याया जल्पचे[illegible]तं. — $G_{3}$ om. 13$^{e}$–15$^{d}$. — $^{e}$) $K_{1.2}$ प्रत्याहारं तु; $K_{3}$ $D_{2}$ °हरंस्तु; $B_{3.4}$ $D_{3.4}$ °हरंति; S ($T_{2}$ $G_{3}$ om.) °हरंत. $D_{8}$ ते (for मे). — $^{f}$) $K_{3.4}$ $B_{3}$ रताः; $B_{1-4}$ Dn $D_{5}$ $D_{6.8.10}$ सदा (for मम).

14 $T_{2}$ $G_{3}$ om. 14 (cf. v.l. 13). — $^{a}$) S ($T_{2}$ $G_{3}$ om.) बाला (for प्रायात्). — $^{b}$) $K_{1.4}$ B (except $B_{5}$) Dn $D_{5}$ $D_{6.10}$ $T_{1}$ transp. कन्या and सा. $K_{1.2}$ कृता; $B_{4.5}$ स्थिता (for धृता). $M_{1.2}$ तपसे [illegible]. — $^{d}$) T G ($T_{2}$ $G_{3}$ om.) हत° (for गत°).

15 $T_{2}$ $G_{3}$ om. 15 (cf. v.l. 13). — $^{b}$) $K_{3}$ B $Dn_{2}$ $Ds_{1}$ $D_{6.10}$ $G_{1}$ व्यजयद्; $D_{7}$ वै जयेद् (for विज°). $K_{4}$ भुवि (for युधि). — $^{d}$) $K_{1.2.5}$ $D_{6.8.10}$ [illegible] ($K_{5}$ $D_{10}$ °व्); $B_{3.4}$ $Ds_{2}$ $D_{8}$ [illegible]. $K_{3}$ $D_{7}$ S ($T_{2}$ $G_{3}$ om.) [illegible].

अपि चैतन्मया राजन्नारदेऽपि निवेदितम् ।
व्यासे चैव मयाराजंस्तौ चोभौ मामवोचताम् ॥ १६
न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ १७
सा तु कन्या महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥ १८
निराहारा कृशा रूक्षा जटिला मलपङ्किनी ।
षण्मासान्वायुभक्षा च स्थाणुभूता तपोधना ॥ १९
यमुनातीरमासाद्य संवत्सरमथापरम् ।
उदवासं निराहारा पारयामास भामिनी ॥ २०
शीर्णपर्णेन चैकेन पारयामास चापरम् ।
संवत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता ॥ २१
एवं द्वादश वर्षाणि तापयामास रोदसी ।
निवर्त्यमानापि तु सा ज्ञातिभिर्नैव शक्यते ॥ २२
ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ २३
तत्र पुण्येषु देशेषु सा प्लुताङ्गी दिवानिशम् ।
व्यचरत्काशिकन्या सा यथाकामविचारिणी ॥ २४
नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे ।
च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ॥ २५ C. 5. 7353 B. 5. 186. 26 K. 5. 186. 26

16 T2 om. $16^{ab}$ (cf. v.l. 13). — $^{a}$) G2.5 अथ (for अपि). K4 D1 T1 G M2 महाराज (for मया राजन्). — $^{b}$) D1 G2 M1.3 नारदेन (for नारदेऽपि). K3 D2 T1 G1.3.5 M (M1.3 *sup. lin.*) वि-; D3.4 च (for ऽपि). — $^{c}$) K4 D1–4 च मया; B Dn Ds D6.7.10 तथा; T1 G1 भवेत् (for मयात्). K1.2 D5 व्यासस्य चैवोभयतः. — $^{d}$) K1.2 कार्यतो; D1 T1 G1 तावुभौ (for तौ चोभौ). D8 सम° (for माम°).

17 $17^{cd}$ = 1. 1. $186^{cd}$. — $^{d}$) K1 (by corr.).2 G3 [अ]ति° (for नि°).

18 $^{a}$) K4 B (except B2) D (except D1.7) transp. तु and कन्या. — $^{c}$) = Cf. $20^{a}$. S आसाद्य (for आश्रित्य). — D6.8 om. (? hapl.) $18^{d}$–$20^{a}$. — $^{d}$) M4 °दारुणं (for °मानुषं).

19 D6.8 om. 19 (cf. v.l. 18). — $^{a}$) T1 G1.3.5 अनाहारा (G1.3 °र-); T2 G2 विजहार (for निराहारा). K3 B3 D2–4.7.10 T2 G1.3 कृशा; K5 B1.2.4.5 दीना (for कृशा) D1 निराहारा क्षमारूपा. — $^{c}$) K3.5 D1–4.7 [आ]सीत्; Dn1 S (except G2) सा (for च). — $^{d}$) K4 D3.4 M1.3 तपस्विनी; B3 D5 तपोवने (for °धना).

20 D6.8 om. $20^{a}$ (cf. v.l. 18); G2 om. $20^{ab}$. — $^{a}$) Cf. $18^{c}$. K3.4 B Dn Ds D1.3.4.10 यमुनाजलम्. K3.4 B D (D6.8 om.) G1 आश्रित्य. — $^{c}$) K (except K4) Dn1 T G2.3.5 उपवासं; D3.4 उपवासात्; G1 उदवासस्थः; Ca उदवासं (as in text). K1.2.5 D7 नित्यमेव (for निराहारा). — $^{d}$) K1.4 D3.4 धारयामास; K3 D7 पाल°; T G1.3.5 M1–4 धार°; G2 काम°; M3 (*inf. lin.*).5 हार°; Ca पार° (as in text). K4 D2 आरत; B Dn Ds D2.8.10 Ca भाविनी (Cap भामिनी as in text); D4 रोदसी (cf. $22^{b}$). G2 संवत्स मथापर.

☞ In Dn2, the portion of the text from stanza 21 up to 5. 195. 3 is lost on a missing fol. The MS. is mostly ignored up to the end of the lacuna.

21 D4 om. (hapl.) $21^{a}$–$22^{b}$. — $^{a}$) K1.2 शीर्णेन पर्णेनैकेन. — $^{b}$) K3 D7 वत्सराम स; K4 D8 पाल°; S धार° (G2 वार°) (for पार°). K4 भामिनी; B Dn1 Ds D2.6 सापरं (for चापरं). — $^{c}$) K4 दीर्घकोपा; D10 तीव्रकोपात्. — $^{d}$) Dn1 Ds D2 (before corr.) G2 M3–5 पादाङ्गुष्ठाग्रवि(Dn1 °नि)ष्ठिता; D8 °ष्ठाग्रसंस्थिता; D10 अंगुष्ठाग्राग्रधिष्ठिता; T1 G1.3 M1.2 पादांगुष्ठेन विष्ठिता; G2 °ष्ठविनिष्ठिता.

22 D4 om. $22^{ab}$ (cf. v.l. 21). — $^{c}$) K3 न च; K4 B D (Dn2 missing) [अ]पि च; K5 (m as in text) T G1.3.5 पित्रा (for [अ]पि तु). — $^{d}$) D3.4 यतिभिर् (for ज्ञातिभिर्). K3 G3.5 M न सा; T2 न स; G2 न च (for नैव).

23 $^{a}$) Ds D3.4.6 ततो हि समभूस्मिन्. — $^{b}$) B3.4 D8 D3.4.6 °सेवितं.

24 $^{a}$) K4 B Dn1 Ds D6.8.10 तीर्थे° (for देशे°). — $^{b}$) K (except K4) D1.7.8 M1.2 सं(D1 स्ना)प्लुतांगी; D5 D6.10 सा प्लुतांगा; T2 सरित्सु च. Ca cites आप्लुतांगी. — $^{c}$) D2 अचरत्; T2 G3 विचरत् (for व्यच°). — $^{d}$) K3 D1.3.10 °विहारिणी; K5 T1 यथाकामं विचारिणी.

25 G2 om. $25^{ab}$; D4 om. $25^{b}$–$26^{a}$. — $^{b}$) K1.2.5 तथार्चीकाश्रमे; K3.4 B Dn1 D1–4.6.8.10 G1 M4 तथोलूका°; D7 तथा कण्वा°. M3.5 विभो (for शुभे). — $^{c}$) K1.2.5 D7 वसि(K2.5 °सि)ष्ठस्याश्रमे; B3 व्यचरत्साश्रमे.

26 D4 om. $26^{abc}$ (cf. v.l. 25). — $^{b}$) K5 D1.2.3 चैव हि; T G (except G2) वै विभो. — $^{c}$) K4 B D (except D3.7; Dn2 missing; D4 om.) महाराज;

इत्युक्त्वा भगवान्देवो यक्षराक्षसपूजितः।
प्रययौ सह तैः सर्वैर्निमेषान्तरचारिभिः॥ ४७
स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा।
समये चागमत्तं वै शिखण्डी स क्षपाचरम्॥ ४८
सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति।
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः॥ ४९
आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम्।
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने॥ ५०

यक्ष उवाच।

शप्तो वैश्रवणेनास्मि त्वत्कृते पार्थिवात्मज।
गच्छेदानीं यथाकामं चर लोकान्यथासुखम्॥ ५१
दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम्।
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम्॥ ५२

भीष्म उवाच।

एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत।
प्रत्याजगाम नगरं हर्षेण महतान्वितः॥ ५३
पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः।
द्विजातीन्देवताश्चापि चैत्यानथ चतुष्पथान्॥ ५४
द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना।
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः॥ ५५
शिष्यार्थं प्रददौ चापि द्रोणाय कुरुपुंगव।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा॥ ५६
प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः।
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः॥ ५७
मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन्।
जडान्धबधिराकारा ये युक्ता द्रुपदे मया॥ ५८
एवमेष महाराज स्त्रीपुमान्द्रुपदात्मजः।
संभूतः कौरवश्रेष्ठ शिखण्डी रथसत्तमः॥ ५९
ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ॥ ६० C. 5. 7551 B. 5. 192. 64 K. 5. 192. 64

---

47 a) $K_{1.2.6}$ $D_7$ सोऽथ (for देवो). — b) $K_4$ B $D_{n1}$ $D_5$ $D_{6.8.10}$ यक्षराजः सुप°. — c) $K_1$ $B_{1.3}$ $T_2$ $G_{2.3}$ सहितैः; $K_4$ $B_{2.4.5}$ D $G_5$ सहितः (for सह तैः).

48 a) $T_2$ $G_2$ °स्तु शासनं प्राप्य. — b) $T_2$ $G_2$ तत्रैवं. — c) $K_{1.2}$ कालेन (for समये). $K_4$ B D (except $D_7$) तूर्णं (for तं वै). — d) $K_4$ B $D_{n1}$ $D_5$ $D_{1-4.6.8.10}$ तं; $T_1$ $G_1$ $M_{3-5}$ च (for स). $D_2$ निशा° (for क्षपा°). $K_{1.2.6}$ $D_7$ शिखंडी यक्षगोचरं.

49 a) $M_{1.2}$ [आ]ह तं (for [अ]ब्रवीद्). — c) S तदा (for ततः).

50 $G_3$ om. $50^{cd}$. — c) $K_4$ पूर्वम् (for सर्वम्). $K_{1.2}$ $D_7$ एतद् (for एव). S यथातत्वं.

51 a) $K_4$ B D (except $D_{1.2.7}$) [अ]हं (for [अ]स्मि). — d) $K_4$ $D_2$ लोके (for लोकान्).

52 $52^{ab}$ = (var.) 5. 154. $24^{cd}$; 156. $4^{ab}$. — a) $C_a$ दृष्टं; $C_{ap}$ as in text. $D_{3.4}$ $T_2$ $G_{1.2.3}$ परं; $C_a$ पुरा (as in text). — c) $K_4$ $D_5$ गमने; $C_a$ as in text. T $G_{1-3}$ हेतोर् (for चेतो). $B_{2.4}$ [ऽ]स्मिन्; $M_{3.4}$ [ऽ]पि (for हि). — d) $K_4$ $G_1$ निदर्शनं (for च द°).

53 All MSS. except $B_{1.3.4}$ $D_{n1}$ om. the ref. — b) $K_{1.2}$ $G_3$ स्थूणा°. — c) S क्षिप्रं जगाम (for प्रत्या°). — d) $B_{1.3.4}$ $D_{n1}$ $D_5$ $D_{8.10}$ महताद्भुतः; S च [illegible]न्वितः.

54 a) $K_{1.2.6}$ $D_7$ T G (except $G_3$) विविधद् (for विविधैर्). — b) $D_{n1}$ $D_5$ $D_{8.10}$ S (except $G_1$ $M_3$) गंधैर्माल्यैर्. $D_1$ महामनाः; $T_1$ $G_1$ मनोरमैः; $T_2$ $G_{2.3}$ मनोहरैः; $C_a$ महाधनैः (as in text). — c) $D_7$ $G_3$ $M_3$ द्विजाति- (for द्विजातीन्). $K_5$ $D_{n1}$ $D_{1.8}$ देवतां. $K_{4.5}$ B D (except $D_{1.2.7}$) चैव (for चापि).

55 a) T G मुदं स; M स मुदं (for मुदं च). $K_5$ $D_8$ $M_3$ परमं. $D_{3.4}$ प्राप (for लेभे). — d) $D_2$ $M_{3-5}$ -पांडवः; $M_{1.2}$ -बांधवः; $C_s$ पांडवैः (for बान्धवैः).

56 a) $K_2$ $D_{n2}$ $D_7$ $C_s$ शिक्षार्थं (for शिष्यार्थं). $K_{2.4}$ B $D_5$ $D_{6.8.10}$ चाथ (for चापि). — d) $K_{1.2.6}$ $B_2$ $D_{1.2.7}$ स्त्रीपूर्वकं. K $B_{2.4}$ $D_{n1}$ $D_{2-4.7.8.10}$ T $G_2$ तदा; $D_1$ ततः (for तथा).

57 a) $D_1$ प्रपेदे च (for प्रति°). — c) $K_{1.2.6}$ $D_7$ कौरवश्रेष्ठ (for सह यु°).

58 c) $K_{1.2.6}$ मूकांध°; $T_2$ $G_{2.3}$ जडांधबधिरा राजन्; $C_a$ as in text. — d) $K_{1.4}$ B $D_{n1}$ $D_{2-4.6.10}$ (m as in text) $T_2$ $G_{1.2}$ मुक्ता (for युक्ता).

59 a) $D_5$ $D_{3.4}$ S एव (for एष). — b) $K_{1.2.6}$ स्त्री[illegible] बभाव वै ($K_5$ चे). — c) $K_4$ B D (except $D_{1.2.7}$) स संभूतः कुरुश्रेष्ठ.

61 a) $K_1$ $M_{3-5}$ एवं (for एनं). — b) $K_2$ $D_2$ समवस्थितं; $B_2$ समर° (for समुप°). — d) $K_4$ $D_{n1}$

C. 5. 7559 S. 5. 192. 65 K. 5. 193. 65 नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ६१
व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ।
स्त्रियां स्त्रीपूर्वके चापि स्त्रीनाम्नि स्त्रीस्वरूपिणि ॥ ६२
न मुञ्चेयमहं बाणानिति कौरवनन्दन ।
न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ६३
एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः ।
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ६४
यदि भीष्मः स्त्रियं हन्याद्धन्यादात्मानमप्युत ।
नैनं तस्मान्निहनिष्यामि दृष्ट्वापि समरे स्थितम् ॥ ६५

संजय उवाच ।

एतच्छ्रुत्वा तु कौरव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ६६

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

## १९४

संजय उवाच ।

प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ १
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुद्यतम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ २
भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ।

D2.4.8 न चाप्युत; K5 च ना°. G1.2 प्रहरत्नापि चाप्युत.

62 b) D1.2.4 इति (for अपि). — c) T G1.2.5 स्त्रीषु; G3 M (except M2) स्त्रीभिः (for स्त्रियां). K1 D8 स्त्रीपूर्वकं; G3 M (except M2) °कैः. K1.2 D1.2.10 T1 चापि; K4 B Dn1 D5 D3.4.6 चैव (for चापि). — d) Ds2 D3.4.7.8 T1 G2.3.5 स्त्रीनाम्नी. K5 B D1.2.8.10 स्त्रीस्वरूपिणि.

63 a) K1.2 क्षिपे° (for मुञ्चे°). B Dn D5 D8.9.10 बाणं (for बाणान्). — G1 om. (hapl.) 63c–64b.

64 D4 (hapl.) G1 om. 64ab (cf. v.l. 63). — a) T G3.5 एवं सर्वम् (for एतत्तत्त्वम्). — b) G3–5 चैव (for तात). — d)=5. 170. 1d. K5 B5 समरे ह्याततायिनं; D1.2 °ष्वपराजितं.

65 b) K1.2 G1 ह्यप्युत; D5 उत्तमं (for अप्युत). K4 B Dn1 D5 D3.4.6.8.10 संततः कुर्विंशाहवं. — For 65c, G1 subst. 63c; for 65d, D5 subst. 64d.

66 K5 om. 66. All MSS. except D2 T G1.2.5 वैशं° उ° (resp. वैशं°) (for संजय उ°). — a) K1.2 च (for तु). — c) B5 D5 D7.10 T1 G2.3.5 अपि (for इव). D2–4 तं (for स). T1 G M1.2.5 संचिंत्य (for स ध्यात्वा). T2 M4 मुहूर्तमपि (M4 sup. lin. मिव) संचिंत्य. — d) D1.2 भीष्मं (for भीष्मे). D3.4 भीष्मोक्तं सोऽभ्यमन्यत.

Colophon. K5 Dn2 D5.9 G4 missing. — Sub-parvan: N (K5 Dn2 D5.9 missing) T1 G3 M: अंबोपाख्यान; to it K1.2.4.5 B Dn1 Ds1 D1–4.6–8.10 T1 G3 M1 (marg.) add समाप्त. — Adhy. name: G3 स्थूणाकर्णकौरवकथनं; M (except M2) शिखंडिपुंस्त्वकथनं. — Adhy. no. (figures, words or both): D8 83 (=183); T1 M4 195; T2 G1.2.5 M2.5 196; G3 193 (as in text); M1.3 194. — S'loka no.: K5 58; Dn1 97.

### 194

☞ This adhy. is missing in Dn2 (cf. v.l. 5. 187. 21) and in K5 (cf. adhy. 192 beginning). B1 is missing from this adhy. up to the end of the parvan. These MSS. are mostly ignored here.

1 K1.2.5 D1 वैशंपायन (for संजय). — a) K5 रजन्यां तु; C8 तु शर्वर्यां (as in text). — b) K1.2.5 D1.7 सुयोधनः (for सुतस्तव). — c) B1.3 G1 M2 सैन्यस्य सर्वस्य (by transp.).

2 Before 2, T2 G1.2.5 ins. दुर्योधनः. — b) M2 यद् (for यद्). K1.4 B2.5.5 Dn1 Ds1 D1–4.6–8.10 M2 उद्यतं; D8 उत्तमं (for उद्यतम्). — c) K1.2 D6 G3 °नागाश्व.

लोकपालोपमैस्तं पृष्टः कुरुसत्तमः ॥ ३
अप्रमेयमनाधृष्यं समुद्रमिव सागरम् ।
सेनामप्रतिमां सैन्यमपि देवैर्महाहवे ॥ ४
केन कालेन गाङ्गेय क्षपयेथा महाद्युते ।
आचार्यो वा महेष्वासः कृपो वा सुमहाबलः ॥ ५
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ।
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ६
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ७

भीष्म उवाच ।

अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते ।
बलाबलममित्राणां स्वेषां च यदि पृच्छसि ॥ ८
शृणु राजन्मम रणे या शक्तिः परमा भवेत् ।
अस्त्रवीर्यं रणे यच्च भुजयोश्च महाभुज ॥ ९
आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः ॥ १०
हन्यामहं महाबाहो पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागं प्रागाह्निकं मम ॥ ११
योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष भागो मतो मम ॥ १२
अनेनाहं विधानेन संनद्धः सततोत्थितः ।
क्षपयेयं महत्सैन्यं कालेनानेन भारत ॥ १३
यदि त्वस्त्राणि मुञ्चेयं महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ १४

संजय उवाच ।

श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्तदा । C. 5. 7572 B. 5. 193. 15 K. 5. 193. 15

3 D1 om. 3ab. — c) K4 B Dn1 Ds D2–4. 6. 8. 10 G1. 2 M2 °[illegible]. D3. 4 शुक्तं (for गुहं).

4 b) K4 B Dn1 Ds D1. 3. 4. 6. 8. 10 M2 उद्धृतमिव. — d) K D1. 3. 7. 8 सबान्धवैः; D3. 4 T2 G2 महाबलैः; G1 महारथैः (also °हवे as in text).

5 G2 om. 5–6. — b) B2. 4. 5 °बलं (for °द्युते). — c) K1 वाक्षिपेद्रोणः (sic); K2 वाक्ष**णः (for वा महेष्वासः).

6 G2 om. 6 (cf. v.l. 5); D1 om. (? hapl.) 6cd. — d) K1. 2. 5 D2. 7 [अ]पि; K4 [अ]त्र; S (except M2; G2 om.) वै (for हि). K1 महाबलाः; K5 D2 T1 बलं मम (for बले मम).

7 a) K1. 2. 5 Ds D1–4. 7. 10 T G1. 2. 3 श्रोतुं; Dn1 तात (for ज्ञातुं). — After 7, S (except M2) reads 13 (for the first time), *repeating* it in its proper place (with v.l.).

8 b) K1 Ds त्वय्येतत्; T G1. 2. 3 M (except M2) तवैव; G3 तथैव (for त्वय्येतत्). — d) K5 स्वयं; B Ds तेषां; T G बलं; M (except M2) वधं (for स्वेषां). B3. 4 Dn1 D3. 4. 6–8. 10 M2 यदिह; B3. 5 Ds अपि च; T G च मम (for च यदि).

9 a) S (except G3 M2) बले (for रणे). — b) T G1. 2 M1 (*inf. lin.*) [आ]हवे (for भवेत्). — c) B Dn1 Ds D3. 4. 6. 8. 10 M2 शस्त्र° (for अस्त्र°). — d) Dn1 D3. 4 T1 महाबल; G3 नराधिप (for महाभुज).

10 b) K1. 2 सरलः; Ca इतरः (as in text). B2 D3. 4 T G योद्धव्या इतरे जनाः. — d) B2 इत्येवं. B3 D2. 6. 8. 10 T2 G2 M2 °निश्चितं. K1. 2 एवं धर्मे सुनिश्चितं; K4 ह्येतद्धर्मनिदर्शनं; K5 [illegible]श्रयः; D4 [इ]त्येत-द्धर्मेषु निश्चितं.

11 a) K4 B Dn1 Ds D3. 4. 6. 8. 10 M2 °भाग (for °बाहो). — d) D3 T G1–3 M (except M2) भागाह्निकं (M1 *inf. lin.* प्रागाह्निकं); G3 निजकरं; Ca. 3 प्रागाह्निकं (as in text).

12 K5 om. 12c–13a. — a) S (except M2) राज्ञां तु (for योधानां). — c) K1. 2 सोमकानामेकमेकं. — d) G3. 3 M1 भारो (for भागो).

13 S (except M2) reads 13 for the first time after 7, *repeating* it here (with v.l.). K5 om. 13a (cf. v.l. 12). — a) K1. 2 D1. 7 अनेन विधिना तात; D2 अनेन विधियोगेन. — c) K1. 2 B2 D3. 4. 7 अहं; K5 G2 (both times). 3. 3 (second time) महा- (for महत्-). — D1 om. 13d–14a. — d) T1 (first time). 2 (both times) G3. 3 (first time) M1 (both times). 3. 4. 5 (first time) केन कालेन भारत.

14 D1 om. 14a (cf. v.l. 13). — a) B3. 4 Dn1 Ds D6. 8. 10 M2 मुंचेयं यदि वा (Dn1 D10 चा-; D6. 8 स्त्रा)स्त्राणि. — b) B2. 5 दिव्यानि (for महान्ति). — c) K1 शतं सहस्र°; K5 Ds शतसहस्र°; D10 स[illegible]शतघातीनि. T1 G2 शतशः [illegible]घातीनि.

C. 5. 7572
B. 5. 193. 15
K. 5. 193. 15

पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ १५
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच स्मयन्निव ॥ १६
स्थविरोऽस्मि कुरुश्रेष्ठ मन्दप्राणविचेष्टितः ।
अस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ १७
यथा भीष्मः शांतनवो मासेनेति मतिर्मम ।
एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ १८
द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ।
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ १९
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ।
जहास सस्वनं हासं वाक्यं चेदमुवाच ह ॥ २०
न हि तावद्रणे पार्थं बाणखड्गधनुर्धरम् ।
वासुदेवसमायुक्तं रथेनायान्तमच्युतम् ॥ २१
समागच्छसि राधेय येनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ २२

इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## १९५

वैशंपायन उवाच ।
एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ १
धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।

---

15 K4 D2.7 om. the ref. K1.2 D1 वैशं° (for संजयः). — b) K1.2.4 B3-5 Dn1 D3 D1.3.4.6.8.10 ततः; T2 तथा (for तदा). — d) G3 अस्त्रभृतां (for अङ्गिरसां).

16 b) K1.2 सैनिकं. — c) T2 G2 (with hiatus!) निहंता (for निहन्या).

17 a) K4 B Dn1 D3 D1.3.4.6.8.10 M2 महाबाहो (for कुरु°). — b) K1.2 संग्रामेल्प°. — c) B Dn1 D3 D1.3.4.6.10 M2 शस्त्रा° (for अस्त्रा°). — d) K1.2 D7 पांडवस्य. K1.2.3 D1.2.7 वरूथिनीं.

18 d) D3.4 एतदेव तु मे बलं.

19 d) K1.2.3 D1.2.4.7 T2 G2.3 महास्त्रवित्; B2.4 महाबलं (for बल°). — D4 om. (hapl.) 19ef. — e) T2 G2.3 पंचभिर्दिवसैः कर्णः. — f) = 5. 195. 5d. K1.2.3 D1.2.7 बलक्षयं; T2 G2.3 महारथः (for महास्त्रवित्).

20 Ds1 om. 20b–21b. — b) K1.2 भीष्मः प्रतापवान्; T1 G1 शांतनवात्मजः. — c) K1.2 D7 स्वनवद्; B2.4.5 सस्वरं; D3.4 सुस्वनं (for सस्वनं). B2 D3.4 हास्यं; B5 वाक्यं (sic); D7 गाढं (for हासं).

21 Ds1 om. 21ab (cf. v.l. 20). — a) K4 B Dn1 Ds2 D3.4.6.8.10 M2 यावद् (for तावद्). — b) K4 B3-5 Dn1 Ds2 D6.10 बाणसंघ°; M2 शरसंघ°. — d) D1 G3 इवागतम् (for इवान्तम्). K1.2 D7 रथेनोत्तमकारिकं; K4 B D3.4.6.8 M2 रथेनायांतमाहवे; Dn1 D6 D10 रथमायांतमाहवे.

22 b) S (except M2) अव° (for अभि°). — d) D3 युक्तं (for वक्तुं).

Colophon. K3 B1 Dn2 D5.9 G4 missing. — *Adhy. name:* K1 (marg.) [illegible]; K3 D2.8 बलाबलपरीक्षा; Dn1 भारतयुद्धप्रमाणं; D7 परस्परजयप्रकंपनं; G3 M1 भीष्मादिबलकथनं (M1 °बलपरिज्ञानं). — *Adhy. no.* (figures, words or both): T1 M4 196; T2 G1.2.3 M3.8 197; G3 194 (as in text); M1.2 195. — *S'loka no.:* Dn1 22.

### 195

☞ This adhy. is missing in K3 B1 (cf. v.l. adhy. 192 and 194 beginning). These MSS. are mostly ignored here.

1 Stanzas 1-3 are missing in Dn2 (cf. v.l. 5. 187. 21). T2 G M1 वैशं° (for संजय उ°). — b) K1.2 समागतान्; Ca उपह्वरे (as in text). — c) K1.2 नृपोत्तम (for आहूय).

2 Dn2 missing (cf. v.l. 1). Before 2, K4 B2.4 Dn1 D6 M2 ins. युधिष्ठिर उ° (resp. युधिष्ठिरः). — a) K1.2 °राष्ट्रेषु. B2.5 M2 सैन्ये तु (M2 सैन्येषु also as in text). — b) K1.2.4 चराः; D1.7 T1 चाराः (for चार°). — c) T G1.2.3 निव°स्य; Ca प्र° (as in text). — d) K3 D2 समैताः; T G समैतां; M2 समेता (for समेताम्).

ते प्रवृत्तिं प्रयच्छन्तु ममेमां व्युषितां निशाम् ॥ २
दुर्योधनः किलापृच्छदापगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ३
मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः ।
तावता चापि कालेन द्रोणोऽपि प्रत्यजानत ॥ ४
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५
तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं स सैन्यं प्रतिजज्ञिवान् ॥ ६
तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः ।
कालेन कियता शत्रून्क्षपयेरिति संयुगे ॥ ७
एवमुक्तो गुडाकेशः पार्थिवेन धनंजयः ।
वासुदेवमवेक्ष्येदं वचनं प्रत्यभाषत ॥ ८
सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव बलं तव ॥ ९
अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनाहं वासुदेवसहायवान् ॥ १०
सामरानपि लोकांस्त्रीन्सहस्थावरजङ्गमान् ।
भूतं भव्यं भविष्यच्च निमेषादिति मे मतिः ॥ ११
यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम ।
कैराते द्वन्द्वयुद्धे वै तदिदं मयि वर्तते ॥ १२
यद्युगान्ते पशुपतिः सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥ १३
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न च द्रोणसुतो राजन्कुत एव तु सूतजः ॥ १४
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम् । C. 5. 7505 B. 5. 194. 15 K. 5. 194. 15

---

D8 व्युस्थितां; Ca. 8 व्युषितां (as in text).

3 Dn2 missing (cf. v.l. 1). — b) K1.2.4 D3.4.7 धृतव्रतं; K5 D2 घृतव्रतं; B3.4.5 महारथं (for महाव्रतम्). — d) D1 S हंता (M2 हन्यात्) (for हन्याः). D1 S (except G5 M2) सेनाम् (for सैन्यम्). K1.2 हन्याः सैन्यानि वै विभो.

4 Dn2 resumes! — a) D2 स (for च). K1.2 (before corr.) उक्ते (for उक्तो). K5 मासेन तेन चाप्युक्तो. — c) K1 M2 वापि (M2 चापि also, as in text); K5 D7.10 G5 M3–5 [अ]पि च; D2–4 चैव. — d) K5 B Dn D8 D3.4.6.8.10 प्रतिजज्ञिवान्; D7 प्रत्यभाषत; M2 प्रतिजग्मिवान्.

5 a) K1.2 गौतमोपि च मासौ द्वौ. — b) B5 T G1.2 M (except M2) च; D2 वा; G5 वि- (for नः). — 5d = 5. 194. 19f.

6 b) K D1–4.7.8 संस्पर्धन्सव्यसाचिना. — c) K5 सैन्यं (for हन्तुं); see below. — d) K2 broken. K4 D8 सैन्यं सं-; D2–4 सैन्यं मे (for स सैन्यं). K1 D1 सैन्यं तत्प्रत्यपद्यत; K5 S (except M2) सैन्यं (K5 हंतुं) मे प्रत्यजानत.

7 b) S (except M2) तत्वतः (for ते वचः). — c) D3.4 तांस्त्वं (for शत्रून्). T1 कियत्कालेन ताञ्छत्रून्. — d) T1 M3–5 क्षपयेद् (for क्षपयेर्). K4 D8 चाब्रवीत्; B Dn D8 D6.10 फाल्गुन (for संयुगे).

8 c) K4 B Dn D8 D1.3.4.6.8.10 समीक्ष्य (for अवेक्ष्य). D3.4 पूर्वं; M3.4.5 एतं (for इदं). — d) K1.2 वचो राजानमब्रवीत्; S वचनं चेद(T2 इदं वचन)मब्रवीत्.

9 G5 om. 9ab. — a) T1 G1–3 M1 एव (for एते). — b) K1.2.5 D2.7 दृढ° (for चित्र°). — After 9ab, D8 D10 read 17ab (for the first time), *repeating* it in its proper place. — c) M3–5 असंख्येयं महत्सैन्यं. — d) K2 D1 M1.2 एवं (for एव). K4 B3.5 Dn D3.4.6.8.10 न संशयः; D1 बलं तथा (for बलं तव).

10 c) K4 B D (except D1.2.7) एव (for अहं).

11 a) D1 सदेवा° (for सामरा°). — b) K4 B D (except D1.2.7) सर्वान्; K5 हन्यां (for सह-). B2 सासुर- (for -स्थावर-). — c) N (except Dn1 D1) T2 G3 भविष्यं च. — After 11, T1 G1.2.5 ins.:

591* यावदिच्छेद्धरिरयं तावदस्ति न चान्यथा ।

12 a) Dn1 D3.4.8 यत्तु; T2 G2 एतद् (for यत्तद्). D2 परं (for घोरं). — b) K1.2 ममेश्वरः; S (for G1 see below) वरं मम (for महन्मम). G1 °दत्तवरं मम. — c) B (except B2) Dn2 D8 D6.8.10 तु; Dn1 च (for वै). K1.2 त्रिपुरं जघान युद्धे वै (hypermetric). — d) = 13d. K4 D3.4 मम (for मयि).

13 K2 D7.8 om. (hapl.) 13. — a) T1 युगांते वै (for यद्युगान्ते). — c) K1 प्रायुंक्त; D3.4 प्रयुंक्त (for °युङ्क्ते). — d) = 12d. D3.4 मम (for मयि).

14 a) D2 यच्च; S (except M2) न (T2 नै-) तज्ज् (for तन्न). — c) K5 D8 D8 G3 तु (for च). — d) B2 भूमिगाः (for सूतजः).

15 a) K4.5 B5 D1.3.4.7 च (for तु). K2 B2.3

C. 5. 7505 B. 5. 194. 15 K. 5. 194. 15 ...जवेनैव युद्धेन विजेष्याम। वयं परान् ॥ १५
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविदः सर्वे युद्धाभिनन्दिनः ॥ १६
व... न्तावभृथस्नाताः सर्वे ...तेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ॥ १७
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ १८
विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
स्वयं चापि समर्थोऽसि त्रैलोक्योत्सादने अपि ॥ १९
क्रोधाद्यं पुरुषं पश्येस्त्वं वासवसमद्युतिम् ।
क्षिप्रं न स ...व्यक्तमिति त्वां वेद्मि कौरव ॥ २०

इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

# १९६

वैशंपायन उवाच ।
ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति ॥ १
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।

---

transp. युक्तं and हन्तुं. D3.4 युक्तः (for युक्तं). S जेतुं (G3 छेत्तुं) (for हन्तुं). — $^{b}$) B3 पृथग्बलं; B4.5 D2–4 G3 M3–5 पृथग्जनः; D1 पृथक् पृथक्; G5 °ग्जनान्; Ca °ग्जनं (as in text). — $^{d}$) K4 D5 D1.3.4.10 रणे (for वयं). D8 D10 रिपून् (for परान्).

16 $^{a}$) G3 तदेमे; M यथेमे (for तथेमे). K1.2 तु महीपालाः; D3.4 T1 पुरुषव्याघ्र. — $^{b}$) S समस्तास् (for सहायास्). — D4 om. (?hapl.) from तव पार्थिव (in $16^{b}$) up to युधि (in $19^{b}$). B4.5 D2.3.7.8 पार्थिवाः; D8 D10 भारत (for पार्थिव). — $^{c}$) K4 B Dn D5 D3.6.8.10 °विद्वांसः. — $^{d}$) K4 B (except B2) Dn D5 D3.6.8.10 °कांक्षिणः. — After 16, K4 D3.8 ins.:

592* वीरव्रतधराः सर्वे सर्वे ...चारितव्रताः ।

17 D4 om. 17 (cf. v.l. 16). K4 D5 om. $17^{ab}$. D8 D10 *repeat* $17^{ab}$ here, reading it for the first time after $9^{ab}$. — $^{a}$) D8 D10 (both times) °भृथे; Ca °भृथ- (as in text). — $^{b}$) K1.2.5 D1.2.7 T G1.2.3 M पुष (for युते). — D6 om. (?hapl.) $17^{c}$–$18^{b}$. — $^{d}$) K3 D5 पाण्डवाः (for °व).

18 D4 om. 18; D5 om. $18^{ab}$ (cf. v.l. 16). — $^{c}$) K4 D5 S चैव (for चोभौ).

19 D4 om. $19^{ab}$ (cf. v.l. 16). — After $19^{ab}$, B Dn D5 D3.4(see below).6–8.10 ins.:

593* सात्यकिश्च महाबाहुर्हैडिम्बश्च महाबलः ।
पुत्रोऽस्यार्जुनपुत्रो यु... ...पराक्रमः ।
भीमेनश्च महाबाहुः सहायो रणकोविदः ।
अभिमन्युश्च कन्यायात्रौपद्याः पञ्च चात्मजाः ।

[ D4 om. from the beginning up to बाहुः in line 3. — (L. 3) D3.4 संग्रामकरकोविदः (for the posterior half). ] — $^{c}$) Dn1 वापि; S चैव (for चापि). D3.4 स्वयं चासि तथा शक्तः. — D4 om. $19^{d}$–$20^{d}$. — $^{d}$) K1.2 त्रैलोक्यदहनेष्वपि; K4.5 B3–5 Dn1 D1.3.4.7.8 G3 M4 °त्सादनेपि च; B2 T G1 M1–3.5 °त्सादनेष्वपि; D2 G2.3 °त्सादने त्वपि; D10 °त्सादने प्रभो; text as in Dn2 D5 D6 only.

20 D4 om. 20 (cf. v.l. 19). — $^{a}$) T G2.3 कोपाद् (for क्रोधाद्). — $^{b}$) K1.2 °द्युतिं; D7 °द्युतिः. B2.4.5 त्वं (B5 स-) च ... स्वयं; B3 Dn D5 D6.8.10 तथा शक्रसमद्युते; T G त्वं पावकसम°. — $^{c}$) K4 B Dn D5 D1.3.6.8.10 स क्षिप्रं न (by transp.). T1 न च; M स न (for न स). K1.5 युक्तं; B2 युक्तं; S चापि (for व्यक्तम्). — $^{d}$) S तथा (T2 G3 तदा) (for इति). D1 G3 M3 त्वां; T1 वै; T2 G1.2 तद् (for त्वां). T G1.2 वेत्थ; G3 वेद्मि (for वेद्मि). K1 को स्थिति; B2.4.5 पार्थिव (for कौरव).

Colophon. K3 B1 D5.6 G4 missing. — *Adhy. name:* K1.2 अर्जुनवाक्यं; K3 D5 ...; G3 M3 अर्जुन(M1 °र्जुनात्म)बलकथनं. — *Adhy. no.* (figures, words or both): D5 84 (=184); T1 M4 197; T2 G1.2.5 M2.3 198; G3 195 (as in text); M1.2 196. — *S'loka no.:* K3 20; Dn 22.

## 196

☞ This adhy. is missing in K3 B1 (cf. v.l. adhy. 192 and 194 beginning); the MSS. are mostly ignored here.

1 G3 M3 (*inf. lin.*) संजय: (for वैशं°). — $^{b}$)

हृतयज्ञा ध्वजिनः स्वस्ति वाच्य हुताग्नयः ॥ २
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे कर्मकृतश्चैव सर्वे चाहवलक्षणाः ॥ ३
आहवेषु पराँल्लोकाञ्जिगीषन्तो महाबलाः ।
एकाग्रमनसः सर्वे श्रद्दधानाः परस्य च ॥ ४
विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ ५
अश्वत्थामा शांतनवः सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ये रथाः ॥ ६
गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः ।
शकाः किराता यवनाः शिबयोऽथ वसातयः ॥ ७
स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम् ।
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ॥ ८
कृतवर्मा सहानीकस्त्रिगर्ताश्च महाबलाः ।
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ९
शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्बलः ।
एते पश्चादवर्तन्त धार्तराष्ट्रपुरोगमाः ॥ १०
ते समेन पथा यात्वा योत्स्यमाना महारथाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठन्त दंशिताः ॥ ११
दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलंकृतम् ॥ १२
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ १३
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ १४
पञ्चयोजनमुत्सृज्य मण्डलं तद्रणाजिरम् । C. 5. 7617 B. 5. 195. 15 K. 5. 195. 15

---

K1.2 D2.7.8 नोदिताः (for चो°). D4 om. from चोदिताः up to दाक्षिणा (in 6c). — c) K1.2 D1 राजेंद्राः; K3 D2.7 राजेंद्र (for राजानः).

2 D4 om. 2 (cf. v.l. 1). — a) G3 चित्र° (for कृत°). — c) K1.2 ते सर्वे (for ध्वजिनः). — d) K1.2 द्विजान्; Ca स्वस्ति (as in text).

3 D4 om. 3 (cf. v.l. 1). 3ab = 5. 149. 6ab. — a) K4 B D (except D1.7; D4 om.) ब्रह्म° (for वेद°). — c) K1 धर्मसंभृत°; K3 D1.7 धर्मसंभृत°; K4 B Dn Ds D3.6.8.10 कामकृत°. — d) K1.2 T G1.2.3 Ca.8 चाहित°; D2 G3 M चाहत°.

4 D4 om. 4 (cf. v.l. 1). — d) N (except D2; D4 om.; K3 B1 missing) परस्परं (for परस्य च).

5 D4 om. 5 (cf. v.l. 1). — ab) Some N MSS. विंदा° विंद°, and कैकेया (for केकया). D7 बाह्लिकाः केकयैः सह (for b).

6 D4 om. up to दाक्षिणा (in c) (cf. v.l. 1). — b) K1.2 गौतमश्च (for सैन्धवोऽथ). — d) B Dn Ds D3.8.10 ये नृपाः; D2 पार्थिवाः; D3.4 ये तथा (for ये रथाः).

7 a) S कृपः (for शकाः). D7 T2 [illegible]. — c) Dn2 Ds D8 T1 शिबयोथ; G1.2 शतशोथ. K1.4 Dn Ds D3.4.6.7.10 वशातयः; K3 विशातयः; T2 G1.2 [illegible].

8 D8 om. 8c–9b. — a) M2.3 सौरनीकैश्च स°. — b) K1.2.3 D1 °रथान्; D2.7 S °रथाः; Ca as in text. — d) B3 हये (for बले).

9 D8 om. 9ab (cf. v.l. 8). D4 om. (hapl.) 9c–10b. — a) D3 G3 सहानीकाः. K1.2 कांबोजश्च महाराज. — b) K3 त्रैगर्ताश्च; B Dn Ds D1.6.7.10 त्रिगर्तश्च; T1 त्रिगर्तोथ. B Dn Ds D6.10 महारथः; M1.2 °रथाः. — D1 om. 9c–10b. — d) K1.2 सर्वैर्भ्रातृभिरावृतः.

10 D1.4 om. 10ab (cf. v.l. 9). — b) K Dn Ds D6.8.10 कौशल्यः. K1.2.5 B2 D2.7 च (for [अ]थ). B4 Dn D10 T2 G1.2 बृहद्रथः. — c) K4 B3 Dn Ds D3.4.6.8.10 अनुगताः; K5 प्रवर्तत; D1 स्ववर्तत (for अवर्तन्त).

11 D6 om. 11ab. — a) M3.4 (*inf. lin.* as in text).5 याता (for यात्वा). K3 D3.4 T2 ते समेता यथान्यायं (K3 T2 यथा यात्वा); B2 ते ससेना यथा मत्वा; B3–5 Dn Ds D7.10 ते समेत्य यथान्यायं. — b) K1.2 गजाश्वरथपत्तयः; K4 B Dn Ds D3.4.8.10 धार्तराष्ट्रा महाबलाः. — c) D3.4 पश्चाद्धि (for °र्धे). — d) K1.2 D7 व्यपातिष्ठंत; D1.2.6 व्यवातिष्ठंत. S व्यतिष्ठंत सुदंशि- (some MSS. °सि)ताः.

12 a) K3 D1.3.4 दुर्योधनस्य; D7 °श्च. — D4 om. 12c–15b. — c) Some S MSS. हस्तिनपुरं.

13 D4 om. 13 (cf. v.l. 12). — b) K3 B3 Ds2 D1.2.7.10 T1 G1 M च (for वा).

14 D4 om. 14 (cf. v.l. 12). — a) K4 D8 हर्म्याणि; B3 रूपा° (for दुर्गा°). — b) D8 °पते (for °पतिः). — c) K1.2.4 कौरव्य.

C. 5. 7617 B. 5. 195. 15 K. 5. 195. 15 सेनानिवेशास्ते राजन्नाविशञ्शतसंघशः ॥ १५
तत्र ते पार्थिवाः पालाः यथोत्साहं यथाबलम् ।
विविशुः शिबिराण्याशु व्यवन्ति सहस्रशः ॥ १६
तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।
व्यादिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् ॥ १७
सगजाश्वमनुष्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधबन्दिनः ॥ १८
वणिजो गणिका वारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तान्कौरवो राजा विधिवत्प्रत्यवैक्षत ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

# १९७

वैशंपायन उवाच ।
तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ १
चेदिकाशिकरूषाणां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ २
विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।

---

15 D4 om. 15ab (cf. v.l. 12). — a) K1.2 पार्थिवांश्च स(?)त्स्य; S पंच(G3 शत) ?जनविस्तीर्ण. — b) K D1-3.7.8 तत्र भारत (for तत्रणा°). — c) K1.2.5 Dn2 D3 D7.10 सेनानिवेशान्; D1 ततो विशालाः (for सेनानिवेशाः). — d) K4 D2.7 S न्यविशन्; K5 निविशन्; D3.4 न्यवसन्; D8 निवसन्. B3 संघशो नृपाः; D3.4 अथ संघशः (for शत°).

16 D7 om. 16. — a) B3 तथैव (for तत्र ते). — b) M2.3 यथोत्साहा. D1 यथावयः; T1 यथासुखं. — c) K1.2.5 D8 अंतः; K4 B3-5 Dn D8 D3.4.6.10 अत्र; B3 एव (for आशु). — D4 om. (hapl.) 16d–18a. K4 D3 read 18d for 16d, *repeating* it in its proper place. — d) T1 माल्य° (for द्रव्य°).

17 D4 om. 17 (cf. v.l. 16). — a) T2 G2.3 तेषु (for तेषां). — b) T1 G3 M1.2 स्व- (for स-). D3 सैन्यानां सुमहा°; D8 सैनिकानां महा°. — G3 om. 17cd. — c) D3 सवाहानां (for सवाहानां). — d) A few MSS. भक्ष- (for भक्ष्य-). K1.2.5 भक्ष्यभोज्यमनुत्तमं; D3 भोज्यभक्ष्यमनु°.

18 D4 om. 18abc (cf. v.l. 16). — a) K1 संगमश्च; B3.5 Dn D8 D6-8.10 सनागाश्व- (for सगजाश्व-). — b) K1.2 शस्त्रोप° (for शिल्पोप°). — c) D3 S ये चान्ये गताश्च. — d) A few MSS. °वंदिनः.

19 D4 om. 19. — a) K4.5 B3.5 Dn D1.6.8.10 च्चा(K5 चौ)राः; B2.4 D3 D7 दाराः; D8 रामाः; T G1.2 चापि (for वाराः). — K1.2 वणिजो गणकारा ये. — b) K (except K4) च चि-; D7 च है; D10 सुदृः; M चापि (for चैव). B2.4 नराः (for जनाः). — c) M2-3 ए(M3 ये)षां च (for सर्वांस्तान्). — d) S पर्यरक्षत (for प्रत्यवै°).

Colophon. K3 B1 D5.9 G4 missing. — *Adhy. name:* K1.2 दुर्योधनसेनानिवेशः; K5 D2.7.8 सेनानिवेशः; B3 सेनानिवेशः; G5 कुरुबल...आवतरणं. — *Adhy. no.* (figures, words or both): D6 85 (=185); T1 M4 198; T2 G1.2.5 199; G3 196 (as in text); M1.2 197; M3.5 189(!). — *S'loka no.:* Dn 19.

## 197

☞ This adhy. is missing in K3 B1 (cf. v.l. adhy. 192 and 194 beginning); the MSS. are mostly ignored here.

1 G3 संजयः (for वैशं° उ°). — After the ref., T1 M1 ins.:

594* संजयेनवम्युक्तस्तु धृतराष्ट्रः सुदुर्मनाः ।
विपुलं चिन्तयंस्तस्थौ गान्धार्या विदुरेण च ।

— b) M3-5 निवेशस्यापि रक्षणे.

2 a) K1.2 तथा (for चेदि-). S °करूशानां. — b) K4 D2.4 सर्वचापि प्रतेजसां. — D4 om. 2c–3a. — d) K4 D3 धृष्टद्युम्नम् (for °केतुम्). D1 अथोदयत्; T1 G2.3 अथादिशत् (for अथादिशत्). K4 om. from अथादि° up to युयुधानं (in 3b).

3 D4 om. 3; K4 om. up to युयुधानं (cf. v.l. 2). — a) K1.2.5 D3 विराटं पार्षतं चैव. — 3c–15b.

पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ३
ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ।
अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ॥ ४
सोऽथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ।
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ॥ ५
अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान्प्राहिणोत्पाण्डुनन्दनः ॥ ६
भीमं च युयुधानं च पाण्डवं च धनंजयम् ।
द्वितीयं प्रेषयामास बलस्कन्धं युधिष्ठिरः ॥ ७
भाण्डं समारोपयतां चरतां संप्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पृशत् ॥ ८
स्वयमेव ततः पश्चाद्विराटद्रुपदान्वितः ।
तथान्यैः पृथिवीपालैः सह प्रायान्महीपतिः ॥ ९
भीमधन्वायनी सेना धृष्टद्युम्नपुरस्कृता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ १०
ततः पुनरनीकानि व्ययोजयत बुद्धिमान् ।
मोहयन्धृतराष्ट्रस्य पुत्राणां बुद्धिनिःस्रवम् ॥ ११
द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ १२
दश चाश्वसहस्राणि द्विसाहस्रं च दन्तिनः ।
अयुतं च पदातीनां रथाः पञ्चशतास्तथा ॥ १३
भीमसेनं च दुर्धर्षं प्रथमं प्रादिशद्बलम् ।
मध्यमे तु विराटं च जयत्सेनं च मागधम् ॥ १४
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ गदाकार्मुकधारिणौ । C. 5. 7638 B. 5. 198. 17 K. 5. 198. 17

4 K3 transp. $4^{cd}$ and $4^{ef}$. — $^{e}$) Dn धिष्ण्यानि; Ca धिष्ण्येषु (as in text). Dn2 M3-5 हुताशनः; D8 हुताशयः. — $^{f}$) K1.2 महाराज (for महेष्वासा).

5 $^{a}$) B Dn D5 D2-4.6.7.10 अथ (for सोऽथ). — $^{b}$) K1.2 योजयित्वा. K1.2 B2 D7 नरर्षभ; Ds2 नराधिपः. — The lines 5. 196. $17^{ab}$–$18^{ab}$ are *repeated* (with the v.l. युधिष्ठिरो for दुर्योधनो) in B Dn D5 D3.4(om. lines 2–3).6–8.10 M4 (om. lines 2–3) after 5; in K2 (om. line 3), after 21.

6 D4 om. $6^{a}$–$13^{e}$. — After 6, G2 reads 8.

7 D4 om. 7 (cf. v.l. 6). — $^{b}$) G2 पांचाल्यं (for पाण्डवं). — $^{d}$) K1.2 D5 D8 शालस्कंधं; K3 D7 स्कंधावारं; Dn1 शाल्यस्कंधं; M5 साल°; Ca.n बल° (as in text). Cs cites स्कंधं.

8 D4 om. 8 (cf v.l. 6). G2 reads 8 after 6. — $^{b}$) K1.2 D8 चरमं; B2 D5 D1 त्वरतां; Ca चरतां (as in text). — $8^{cd}$=(var.)5. 149. $51^{cd}$. — $^{c}$) K1.2 धृष्टानां (for हृ°). M (except M1) यौधानां (for यो°). D5 तत्र तत्र च योधानां. — $^{d}$) K1 इह; D1.2 T2 G2.3 अथ; T1 अपि; G5 उप- (for इव).

9 D4 om. 9 (cf. v.l. 6). — $^{c}$) B D (except D2; D4 om.) अ(B2 त)थापरैर्महीपालैः. — $^{d}$) K1 महात्मभिः; K5 D1.7 महामतिः; S महारथः (for महीपतिः).

10 D4 om. 10 (cf. v.l. 6). — $^{a}$) T G2.3.5 °धंवी; G1 °वासि (for °धनी). B2 समेता भीमसेनेन; Ca भीमधन्वायनी सेना. — $^{b}$) K4 B3-5 Dn D5 D6.8.9.10 धृष्टद्युम्नेन पालिता; M3-5 °पुरोगमा. — $10^{cd}$=(var.) 5. 149. $49^{cd}$. — $^{c}$) K1.2 नदीव; G3 गांगेव. T1 M3-5 पूर्णा. K1 स्वनिता; K2 स्वनिता. — $^{d}$) D5 D2.8 स्पंदमाना; D1 स्पर्धमाना. G3 प्रदृश्यत.

11 D4 om. 11 (cf. v.l. 6). — $^{b}$) K4.5 B D (D4 om.) G1 M5 व्ययोज°. — $^{d}$) K1.2 बुद्धिनिश्रवान्; K4 B4.5 Dn D2.3.6.8 G3 °निश्रयं; K3 B2 D10 °निश्चयं; D1 °मीश्वरः; G1 बलानि तं; Ca as in text. Cs cites बुद्धिनिःस्रवं.

12 D4 om. 12 (cf. v.l. 6). — $^{b}$) K1.2 Ds2 D1.7 पांडवं; K5 पांडवान्; S भारत.

13 D4 om. $13^{abc}$ (cf. v.l. 6). — $^{a}$) T2 G1.2.5 M1 हयान् (for दश). S (for T1 see below) पंच° (for चाश्व°). T1 अश्वानां पंचसाहस्रं. — $^{b}$) K1.2 D2 द्विसाहस्राः; K4.5 D1.3.8 °सहस्राः; T1 G3 °सहस्रान्; T2 G2 °सहस्रं; G1.5 °साहस्रान्. B Dn D5 D6.7.10 द्विसहस्राणि दंतिनां. — $^{d}$) T G रथान् (for रथाः). K1 पंचदशास्तथा; K5 G3 पंचाशतं च; B Dn D5 D6.7.10 T1 G5 पंचशतं तथा; T2 G1.2 M1.2 पंचशतांस्तथा.

14 $^{a}$) K4 B3.4 Dn D2-4.6 भीमसेनस्य (for °नं च). D3.4 दुर्धर्षः. — $^{b}$) K1.2 Dn2 प्राविशत्; T1 G3.5 व्यादिशत् (for प्रादिशत्). — $^{c}$) K1 सर्वमेव; K2 B5 मध्यमं तु. K4.5 B3 Dn2 D5 D6.7.10 च; Dn1 [ऽ]थ (for तु). S (except G3) वै (for च). — $^{d}$) B Dn D5 D3.4.6.10 पांडवः (for मागधम्). D1 *repeats* $12^{d}$ (for $14^{d}$).

C. 5. 7080 B. 5. 198. 18 K. 5. 196. 18

अन्वयातां ततो मध्ये वासुदेवधनंजयौ ॥ १५
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा ध्वजाः शूरैरधिष्ठिताः ॥ १६
पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ।
पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ १७
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे ।
तत्र ते पृथिवीपाला भूयिष्ठं पर्यवस्थिताः ॥ १८
तत्र नागसहस्राणि हयानामयुतानि च ।
तथा रथसहस्राणि पदातीनां च भारत ।
यदाश्रित्याभियुयुधे धार्तराष्ट्रं सुयोधनम् ॥ १९
ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः ।
नदन्तः प्रययुस्तेषामनीकानि सहस्रशः ॥ २०
तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
वादयन्ति स्म संहृष्टाः सहस्रायुतशो नराः ॥ २१

इति श्रीमहाभारते उद्योगपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ समाप्तमम्बोपाख्यानपर्व ॥

॥ समाप्तमुद्योगपर्व ॥

---

15 ᵃ) K₅ D₇ महेष्वासा (for महारथौ). D₇ तथा तुल्यौ; S महेष्वासा (G₃ महेष्वासा) (for च पाञ्चाल्यौ). — ᵇ) = 3ᵈ. G₃ सर्वशः निबर्हणौ. — ᶜ) K₅ महेष्वासा; B₃ महेष्वासा; S महाभागौ (for °त्मानौ). — ᶜ) K₁.₂ B₃ अनुयातौ (for अन्वयातां). K₅ B₄.₅ Dn D₃ D₈.₉.₁₀ तदा; T₂ G₂.₅ M तयोर् (for ततो). — After 15, T G₂.₃.₅ ins.:

595* तौ दृष्ट्वा पृथिवीपाला अहमिन्द्र मेनिरे ।
अन्तरिक्षगताः सर्वे देवाः सेन्द्र पुरोगमाः ।

[ (L. 1) T₂ G₂ तान् (for तौ), and नहम् (for नहम्). ] — After the above, G₂ reads 17ᵃᵇ.

16 ᵃ) K₁.₂ अभि° (for अति°). — ᵇ) M₃–₅ नरः (for नराः). — T₁ om. 16ᶜᵈ. — ᶜ) K₁.₂ ते च; D₈ ते तु (for तेषां). — ᵈ) K₄ तथा; B₃.₅ D₃.₄.₆ T₂ G हयाः; M रथाः (for ध्वजाः).

17 G₂ reads 17ᵃᵇ after 595*. — ᵇ) K₁ D₇.₈ G₃ °वंशकाः. K₄ D₃.₄ भारत (for सर्वशः). D₁ रथानां च सहस्रशः. — ᶜ) K₁.₂ D₈ ते (for ये). K₅ पदातीन्य सहस्राः; D₇ पदाता बहुसाहस्राः; T₁ बभूवुरतिसंरब्धाः (= 16ᵃ). — ᵈ) K₅ om. 17ᵈ. D₇ तस्मिन्यौधिष्ठिरे बले. — After 17ᶜᵈ, D₇ *repeats* 4ᵉᶠ (with v.l. महाराज for महेष्वासा). — ᵉ) D₁₀ ययुः (for ऽन्वयुः). K₅ सह अन्वययुः पश्चात्; D₇ सहस्रमन्वयुः पश्चात्.

18 ᵃ) K₅ D₇ राजा युधिष्ठिरो यत्र. — ᵇ) K₅ D₇ स्वयमास; M यत्र चैव (for स्वय°). S (G₁ broken) च फाल्गुनः (for बला°).

19 D₇ om. 19ᵃᵇ. — ᵃ) K₅ रथ-; T₁ ततो (for तत्र). — D₁.₄ M₂ om. 19ᵇᶜ. — ᶜ) D₆ रथाः (for तथा). D₆ शत; T₁ वृथा (for रथ-). — ᵈ) T₁ G₁ सर्वशः (for भारत). K₁.₂ पदातीश्चाप्यनेकशः. — After 19ᶜᵈ, N ins. a passage given in App. I (No. 14). D₈ resumes from line 9 of the above App. passage. — K₄ om. 19ᵉ–21ᶜ. B₄ lost to the end! — ᵉ) T₁ G₂.₃.₅ चा(G₂ च)श्रित्य (for यदाश्रित्य). B Dn D₃.₈ अथ (for अभि-). K₅ D₂ T G₂.₃.₅ -युयुजे (for -युयुधे). K₁.₂ यदा निवृत्य युयुधे; D₁ यदभिश्यां हि युयुधे.

20 K₄ om. 20 (cf. v.l. 19). B₄ missing. — ᵃ) B₂ D₃ D₇.₁₀ S (G₁ broken) C₃ गणशः (for शतशः). — ᵇ) = 21ᵈ. S -शतशो (for -[अ]युतशो). — ᶜ) B₃.₅ Dn D₃.₈ नर्दन्तः (for नदन्तः). — ᵈ) B₂.₅ च सर्वशः; D₂ समंततः (for सहस्रशः).

21 K₄ om. 21ᵃᵇᶜ (cf. v.l. 19). B₄ missing. — ᵃ) D₁ T₁ ततो (for तत्र). D₃.₈ °सहस्राणां. — ᶜ) K₅ वादयंतः स्म; B₂.₃.₅ Dn D₃ D₅.₆.₁₀ व्यवादयंत; D₈ नादयंति स्म (for वादयन्ति स्म). M (except M₂) सु- (for स्म). C₃ cites वादयंति (as in text). — ᵈ) = 20ᵇ. S -शतशो (for -[अ]युतशो).

Colophon. K₃ B₁.₄ D₉ G₄ missing. — *Major parvan:* K₃ D₂ उद्यम° (for उद्योग°). — *Adhy. name:* K₂.₄.₅ D₃.₄.₇ सेनानिर्याणं; Dn D₂ सेनानिर्याणं; D₂ सैन्यनिष्क्रमणं; D₈ सैन्य निवेशवर्णनं; T₁ G₂.₅ M₁ पाण्डवसैन्यसंनाहः (G₅ °हं); M₂ भारतसन्नाहः. — MSS. mostly add समाप्तं after the major parvan or adhy. name; some add it twice. — *Adhy. no.* (figures, words or both): K₅ 186; D₆ 85 (= 185); T₁ M₄ 199; T₂ G₁.₃.₅ M₂.₅ 200; G₃ 197 (as in text); M₁.₃ 198. — *Śloka no.:* Dn₁ 39; Dn₂ 34.

भारताद्भरतश्रेष्ठ कन्यामिह दृश्यते ।
तेषां श्रुत्वा प्रतिज्ञां तां नामकर्माणि कीर्तनात् ।
कृत्वापि पातकं घोरं सद्यो मुच्येत मानवः ।
इतिहासमिमं श्रुत्वा यथावद्भरतर्षभ ।
संयम्यान्तःशुचिर्भूत्वा पारं गत्वा तु भारते ।
तेषां श्राद्धानि देयानि रत्नानि विविधानि च ।
गावः कांस्योपदोहाश्च कन्याश्चैव स्वलंकृताः ।
सर्वकामगुणोपेता यानानि विविधानि च ।
भवनानि विचित्राणि भूमिर्वासांसि काञ्चनम् ।
वाहनानि च देयानि हया मत्ताश्च वारणाः ।
शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलंकृताः ।
यद्यद्गृहे वरं किंचिद्यद्यदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः ।
श्रद्धया परया दत्तं क्रमशस्तस्य पारगः ।
सत्यार्जवपरो दान्तः शुचिः शौचसमन्वितः ।
श्रद्दधानो जितक्रोधो यथा सिध्यति तच्छृणु ।
पर्व उद्योगमासाद्य काञ्चनं संप्रदापयेत् ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
उदितादित्यसंकाशं ज्वलन्तमनलोपमम् ।
विमानं विबुधैः सार्धमारुह्य दिवि गच्छति ।
यथा रत्नानि भवने संक्रम्य दिवि मोदते ।
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम् ।
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः ।
संस्कृतः सर्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ।
ईदृशाद्वाचकाद्राजन्श्रुत्वा भारत भारतम् ।
नियमस्थः शुचिः श्रोता शृण्वंस्तत्फलमश्नुते ।
जाम्बूनदमयैर्दिव्यैः सर्वतो वृतम् ।
सेवितं चाप्सरःसंघैर्देवैराकाशचारिभिः ।
विमानं समधिष्ठाय श्रिया परमया ज्वलन् ।
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
मोदते दैवतैः सार्धं दिवि देवो यथामरः ।
उद्योगे भारतश्रेष्ठ हविष्यन्नं प्रदापयेत् ।
पूपकैश्च विशेषेण सर्वमन्नं प्रदापयेत् ।
यथान्यायं गन्धमाल्यैः पूजयेच्च पृथक्पृथक् ।
श्रुतेऽश्विसूपर्वे दद्यात्ब्राह्मणेभ्यश्च दक्षिणाम् ।
भोजयेद्विविधाहारैर्भक्ष्यभोज्यसमन्वितैः ।
पाठकस्य विशेषेण स्वर्णं दानपूर्वकम् ।
संहिताः सकाशाद्राजन्भवतः शिष्यसंमिताः ।
हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत् ।
देवताः कीर्तयेत्सर्वा नरनारायणादिकाः ।
ततो गन्धैश्च माल्यैश्च स्वलंकृत्य द्विजोत्तमान् ।
तर्पयित्वा तु विविधैः कामैर्दानैश्च वचैस्तथा ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ।
प्राप्नुयाच्च क्रतुफलं श्रुत्वा पर्वणि पर्वणि ।

वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः ।
भविष्यं श्रावयेद्विद्वान्भारतं भरतर्षभ ।
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम् ।
वाचके तु परे तुष्टे शुभगा प्रीतिरुत्तमा ।
ब्राह्मणेषु च तुष्टेषु प्रसन्नाः सर्वदेवताः ।
इत्येष विधिरुद्दिष्टो मया ते द्विपदां वर ।
श्रद्दधानेनैव भाव्यं यन्मां त्वं परिपृच्छसि ।
भारतश्रवणाद्राजन्पारणाच्च द्विजोत्तम ।
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ।
भारतं श्रृणुयान्नित्यं भारतं परिकीर्तयेत् ।
भारतं भवने यस्य तस्य हस्तगतो जयः ।
भारतं परमं पुण्यं भारते विविधाः कथाः ।
भारतं सेव्यते देवैर्भारतं परमं पदम् ।
भारतं सर्वशास्त्राणां शुभमं भरतर्षभ ।
भारतात्प्राप्यते श्रेयो मोक्षस्त्वेतद्ब्रवीमि ते ।
महाभारतमाख्यानं क्षितिं गां च सरस्वतीम् ।
ब्राह्मणं केशवं चैव कीर्तयन्नावसीदति ।
आदौ चान्ते च मध्ये च विष्णुः सर्वत्र गीयते ।
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः ।
तच्छ्रोतव्यं मानुषेण परमं पदमिच्छता ।
एतत्पवित्रं परममेतद्धर्मनिदर्शनम् ।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ।

वैशंपायन उवाच ।

यः सर्वं शृणुते राजन्निदं श्रीपरिवर्धनम् ।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ।
सर्वपापविनिर्मुक्तो लभते वाञ्छितं फलम् ।
यो भूत्वा सावधानो वै शृणोति भारतं नरः ।
स वाञ्छितार्थं लभते पुत्रपौत्रसमन्वितः ।
उद्योगं लभते जन्तुः पाण्डवोद्योगसंश्रवात् ।
जनमेजय हे राजंस्त्वमप्येवं समाचर ।
अतः परं भीष्मपर्व शृणु राजन्समाहितः ।
भारतं भानुमानिन्दुर्यदि न स्युरमी त्रयः ।
अज्ञानतिमिरान्धस्य कावस्था जगतो भवेत् ।
य इदं कीर्तयेन्नित्यं यत शृणुयान्नरः ।
स ब्रह्मणः स्थानमेत्य प्राप्नुयाद्देवदुर्लभम् ।
इदं हि वेदैः समितं पवित्रमिदमुत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ।
अस्मिन्नर्थश्च धर्मश्च निखिलेनोपदेक्ष्यते ।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी ।
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं श्रुत्वा श्रावयिरवार्थमश्नुते ।
भ्रूणहत्याकृतं चापि पापं जह्याच्च संशयः ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।

महीं चापि जय[illegible] शत्रूंश्चापि पराजयेत् ।
इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत् ।
महिषी[illegible] यराजाभ्या श्रोतव्यं च [illegible] ।
अथवा[illegible]मि[illegible] सुवर्णं धर्मशा[illegible]मि[illegible] परम् ।
मो[illegible] शास्त्रमिदं प्रोक्तं व्यासेनामित[illegible] द्विना ।
संप्रत्याचक्षते चेदं तथाचव[illegible] चापरे ।
पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियका[illegible] ।
शरीरेण कृतं पापं वचसा मनसैव च ।
सर्वं सन्त्यजते क्षिप्रमिदं शृण्वन्नरः सदा ।
धर्म्यं यशस्यमायुष्यं स्वर्ग्यं पुण्यं तथैव च ।
य इदं मानवो भक्त्या पुण्यान्वै ब्राह्मणा[illegible]चान् ।
श्रावयेत महापुण्यं तस्य धर्मः सनातनः ।
योऽधीते प्रथमं नित्यं ब्राह्मणो नियतव्रतः ।
चतुरो व[illegible]कान्मासान्सर्वपापः प्रमुच्यते ।
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति ।
उभे संध्ये ज[illegible]न्कश्चित्सर्वपापः प्रमुच्यते ।
यश्चैनं शृण्[illegible]न्नित्यमार्ष [illegible]समन्वितः ।
स दीर्घमायुः कीर्तिं च स्वर्गतिं प्राप्नुयान्नरः ।
चत्वार एकतो वेदा म[illegible]भारतमेकतः ।
सुरर्षिभिः समागम्य तुलामारोपितं पुरा ।
महत्त्वाच्च गुरुत्वाच्च महाभारत[illegible]च्यते ।
[illegible]वप्रा[illegible]मस्कृत्य मनो[illegible]द्विसमाधिभिः ।
संपूज्य च [illegible]गन्धाम्बिदुषो जनान् ॥
यो भारतं पूजयति वस्त्रदानै-
धूपैः फलैश्चन्दनपुष्पपत्रैः ।
[illegible]वर्णदानेन यथा च शक्त्या
लोकं स गच्छेत्फलमस्य योनेः ॥
इ इमां कुरुते पूजां समाप्तौ पुस्तकस्य च ।

[illegible]नां[illegible]कामानवाप्नोति [illegible]समन्वितः ।
भारतं निन्दयेद्यस्तु [illegible]ानकम एव सः ।
ब्रह्महत्यासमं पापं भवेत्तस्य न संशयः ।
अत्रैव धमसा[illegible] निन्दने क्षीयते कुलम् ।
अवक्षेयो न पूजार्हो वक्तव्यं ते न युज्यते ।
संनिधाने न गन्तव्यं तस्य यो निन्दयेदिदम् ।
श्रुतं स्तुतं मतं येन म[illegible]पातकनाशनम् ।

इति श्रीमहाभारते शतसाहस्रसंहितायां वैयासिक्यां [illegible]ोगपर्व समाप्तं ॥ — This is followed by the first stanza of Bhīṣmaparvan; then the table of contents, which is followed by:

संपोष्यं स[illegible] पत्यवत्परकराद्रक्ष्यं च सुक्षेत्रवत्
संशोध्यं व्रणिनो[illegible]वातिदिनं वीक्ष्यं च सन्मित्रवत् ।
बध्यं बध्यवदक्षयं न हि न विक्रयं हरेनीमवत्
नैवं सीदति पुस्तकं किल कदाप्येतद्गुरूणां वचः ॥

शके ११६ [? १६१६] [illegible]संवत्सर श्रावणवदि १२ ते दिवशीं त्रिव[illegible]णेकेन लिखितं ॥
— D10 ins. after the last colophon: [illegible]ोगपर्वण्यमी वृत्तान्ताः । राज्ञां [illegible]तप्रस्थापन मंत्रः । पुरोहितयानं । शल्यवरप्रदानं । इंद्रविजयः । [illegible]जययानं । प्रजागरः । वि[illegible]रवाक्यानि । सनत्सुजातीयं । यानसंधिः । भगवद्यानं । दम्भोद्भववाक्यानं । म[illegible]णं । गालवचरितं । विभ[illegible]दर्शनं । विदुलापुत्रा[illegible]शासनं । कर्णोपनिवादः । कर्णकुंतीसमागमः । अभिनिर्याणं । उलूकयानं । रथातिरथसंख्या । अंबोपाख्यानं । [illegible]सैन्याहश्च ॥ अतः परं भीष्मपर्व भविष्यति ॥ शके १६८८ [illegible]संवत्सरे भा[illegible]पदासितत्र्य[illegible]दश्यां गोविंदद[illegible]त्रेण किंचिज्जीर्णमेव पूर्वोत्तरभागाभ्यां पूर्णार्थं लिखितं ॥ श्रीरस्तु ॥ छ ॥ छ ॥

# APPENDIX I

This Appendix comprises a series of additional passages found in different MSS. which have been cited in the foregoing footnotes to the constituted text, but which, for various reasons, were not quoted there in extenso. They are mainly passages which were too long to be included in the footnotes; but along with them there will be found a certain number of short unimportant passages also, which could have been very easily accomodated in the footnotes, but which being found in single MSS. or in a very small group of cognate MSS. have been relegated to this Appendix as being of no special value for critical purposes.

The variants cited here are of the same order as those of the additional lines noted in the footnotes to the constituted text; in other words, the variants of monosyllabic verse-filling particles (such as च-वै-तु-हि) and adverbs (such as तथा-तदा-ततः, एव-एवं), discrepant readings of single MSS., corrupt readings, and common doublets (वेदि-वेदी, रोम-लोम) have been generally ignored, scribes' errors have been silently corrected. Furthermore, the variants of the short prose formulaic references to the speaker (such as वैशंपायन उवाच) have been uniformly ignored here.

## 1

After 5. 39. 31, N (K3 missing) T G1.4 ins.:

असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ।
उपलभ्याप्यविदितं विदितं चाप्यनुष्ठितम् ।
पापोदयफलं विद्वान्यो नारभति वर्धते ।
यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते ।
सोऽन्यापराधे दुर्मेधा विषमे विनिपात्यते ।
मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ।
अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ।
मदं स्वप्नमविज्ञानमाकारं चात्मसंभवम् ।
दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ।
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृपः ।
त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ।
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ।
नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ।
मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञो मन्त्रं समाचरेत् ।

## 2

After adhy. 44, all MSS. (except D9.10 G2; K2.3.5 missing) ins. the following addl. adhy. (K4 om. lines 2–25; T G1.3–5 om. lines 5–23):

सनत्सुजात उवाच ।

शोकः क्रोधश्च लोभश्च कामो मानः परासुता ।
ईर्ष्या मोहो विवित्सा च कृपासूया जुगुप्सुता ।
द्वादशैते महादोषा मनुष्यप्राणनाशनाः ।
एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।
यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ।
स्पृहयालुरुग्रः परुषो वावदान्यः
क्रोधं बिभ्रन्मनसा वै विकत्थी ।
नृशंसधर्माः षडिमे जना वै
प्राप्याप्यर्थं नोत सभाजयन्ते ।

---

### 1

(L. 1) T1 G1.4 ससम्यक्; Ca.s असम्यक् (as above). T1 G1.4 नानासूत्रशतैरपि (for the posterior half). Cs cites स्वकुशलैः. — (L. 2) B D3–6 T2 Cn उपलभ्यं Cs उपलभ्य (as above). B D3–6 T2 च; D8 D10 हि (for [अ]पि). B (except B3) D (except D1.2.8.9) T2 चाननुष्ठितं (for चाप्य°). — (L. 3) K2.5 T1 G4 पापोदयं; Ca.s पापोदय- (as above). K4 D2.7 Ca.s नाचरति; D1 Cn नारभते; T1 G1.4 वाचरति (for नारभति). — (L. 4) B1.2.3 T2 पूर्वं कृतं; T1 G4 पूर्वकृते; Ca.s पूर्वकृतं (as above). D5 D9.10 अविमृज्यानुवर्तते; D1.3.4 अवमृश्यानु°; T1 G1.4 नानुमृश्यानु(T1 °भि)वर्तते; Ca.s as above. — (L. 5) B Dn D5 D2 m.3–6.10 T2 Cs अगाधपंके (for सोऽन्यापराधे). K4 D9 विषमेषु निपात्यते; D1 विषयैर्विनि°. — (L. 6) T1 G1.4 अत्र (for मन्त्र-). K2 मूलानि (for द्वाराणि). K1.4 D8.9 एतानि (for इमानि). — (L. 8) K2 मदः; Dn1 D6.9 मंद-; D1 पदं; T1 G1.4 अथ; Ca मदं (as above). D1.8 Ca.s अवज्ञानं. — (L. 9) K4 Dn1 D1–4.8.9 T1 G1 दूतांश्च (for दूताच्च). K4 Dn1 D1–4.7–9 T1 G1 कुशलान्. — (L. 11) K4.5 B3 Dn1 D1.2.5–7.9 त्रिवर्गाचरणे. B3 T1 G1.4 अधिगच्छति; Ca.s as above. — (L. 12) K2.5 B Dn D1.6.8–10 T2 वा (for च). — (L. 14) K1.5 प्रक्षिप्तं (for पतितं). — (L. 15) K2 D7.9 हुतं नष्टम् (for नष्टं हुतम्). — (L. 16) K5 D5 D8 Ca.s.np ज्ञात्वा; T1 G1.4 बुद्ध्वा; Cap.sp मत्या (as above). — (L. 17) K1.4 D3–6.9 T G1.4 च (for [अ]थ). K1.5 B Dn2 D5 D1.2.5–8.10 T2 Cs प्राज्ञैर् (for प्राज्ञो). K5 B Dn2 D5 D1.5.6.10 T2 Cs मैत्रीं (for मन्त्रं). D5 D10 समारभेत् (for °चरेत्).

### 2

For the omission of this passage from the constituted text, see note after adhy. 44; see below also. — (L. 1) D3.4 transp. शोकः and क्रोधः. D1 मोहः; T G1.3–5 M दंभः; Cs लोभः (as above). K1 B D5 D5 (after corr.).7.8 Cn.s मोहः; D5 (before corr.).6 T G1.3–5 M Cnp लोभः (for मानः). — (L. 2) K1 B1.3.4 D5 D1.2.5–8 मानो (for मोहो). B D3–6 T2 विधित्सा (for विवित्सा). K1 T1 [अ]कृपा (for कृपा). K1 Dn D1–8 T2 G1.3.4 M जुगुप्सता; B D5 जुगुप्सिता; Ca as above. — (L. 3) D1 मनुष्यस्य प्रणाशनाः. — (L. 4) Om. in B D5 D1. K1 D8 एकैकशस्तु; D2 एकैक एते; T1 एकैकमेव. K1 D2.7.8 T G1.3–5 M मनुष्यं. — (L. 5) Om. in M. D5 Cs मूढबुद्धिर्व्यवस्यते. — (L. 6) K1 D1.5.7.8 M स्पृहालुः; Ca.s स्पृहयालुः (as above). D3.4 स्पृहयालुरुग्रः. K1 B3 D5 D1.2.5 (before corr.).6–8 M पुरुषः; Ca.s परुषः (as above). K1 B3 D5 D1–8 M om. वा. Cs cites वदान्यः; Ca अवदान्यः (as above). — (L. 7) D1 कोपं (for क्रोधं). K1 D2.7.8 बिभ्रत् कोपं (D7 क्रोधं); M चाक्रोशान्बिभ्रत् (for क्रोधं बिभ्रत्). M om. वै. K1 D1.7.8 यः (for वै). M कत्थी (for विकत्थी).

संभोगसंविद्विषमोऽतिमानी
दत्त्वा विकत्थी कृपणो दुर्बलश्च ।
बहुप्रशंसी वनिताद्विट् सदैव
सप्तैवोक्ताः पापशीला नृशंसाः ।
धर्मश्च सत्यं च तपो दमश्च
अमात्सर्यं ह्रीस्तितिक्षानसूया ।
दानं श्रुतं चैव धृतिः क्षमा च
महाव्रता द्वादश ब्राह्मणस्य ।
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वार्थितो यो
नास्य स्वमस्तीति च वेदितव्यम् ।
दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् ।
एतानि ब्रह्मुख्यानां ब्राह्मणानां मनीषिणाम् ।
सद्वासद्वा परीवादो ब्राह्मणस्य न शस्यते ।
नरकप्रतिष्ठास्ते वै स्युर्य एवं कुर्वते नराः ।
मदोऽष्टादशदोषः स स्यात्पुरा योऽप्रकीर्तितः ।
लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषावचः ।
कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् ।
अर्थहानिर्विवित्सा च मात्सर्यं प्राणिपीडनम् ।
ईर्ष्या मोहोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता ।
तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ।
सौहृदे वै षड्गुणा वेदितव्याः
प्रिये हृष्यन्त्यप्रिये च व्यथन्ते ।
स्यादात्मनः सुचिरं याचते यो
ददात्ययाच्यमपि देयं खलु स्यात् ।

Cs मनसा वै विकत्थी (as above); Csp मनसा विप्रकर्षी. — (L. 8) D7 नृशंसवर्णाः; M त्यक्तस्वधर्मः; Ca.s नृशंसधर्माः (as above). D1.2 सदा; D3.4 स्युः; M तु (for वै). K1 D8 नृशंसधर्मा (D8 °जन्मा) च जना ध्रुवं सदा. — (L. 9) K1 D8 Ca.s सदोपभुंजते; B3 D5 D3.4 सभाजयंति; D2.7 संतो भजते. D1 प्राप्यापदं लोभमथोपभुंजते; M संप्राप्यार्थं नोत संभावयंति. — (L. 10) D1 संभोगविद्वेषं; D2 संभोगसंपद्विषमो; D7 संभोगविद्विषमो; Cs as above. K1 D8 [अ]वमानी; B1.2.5 D1–4.7 [अ]तीवमानी; M1.2.4 [अ]थ मानी; Cs [अ]भिमानी (for ऽतिमानी). — (L. 11) M कदर्थी; Cs विकत्थी (as above). K1 D1.2.7.8 [अ]बलीयान्; M दुर्बलीयान् (for दुर्बलश्च). — (L. 12) K1 B2.5 D1.2.7.8 M वर्गप्रशंसी (for बहु°). B2 वंदितद्विट्; D7 M1 वनितां; M2–5 वंदिवत् (for वनिताद्विट्). K1 D8 वनितावमानी (for वनिताद्विट् सदैव). B (except B4) Dn1 D5 D1.2 M2–5 तथैव; D7 M1 च द्वेष्टा (for सदैव). — (L. 16) M श्रुतिश्च (for श्रुतं). — (L. 17) K1 महाव्रतानि; Ca.s महाव्रता (as above). — (L. 18) D5 ये; Ca यः (as above). K1 B1.3.5 D1.2.7.8 M Cs om. न. B3 Ca प्रभवेत्; D2 प्रच्यवते; M प्रवसेत्; Cs प्रच्यवेत् (as above). B2 Dn2 Ds2 D1–8 M द्वादशेभ्यः; Cs द्वादशभ्यः (as above). — (L. 19) D8 om. अपि. B2 वसुधां; Ca.s पृथिवीं (as above). K1 D1.2.8 Ca प्रशासन्; M प्रशिष्यात्; Ca स शिष्यात् (as above). — (L. 20) B (except B4) D5 Cs वान्वितो यः (Cs वा); D3.4 नान्वितो वा; M1 वावशिष्टः; M2 वावशिष्टं; M3.5 वा विशिष्टं; M4 वापि शिष्टां (for वार्थितो यः). K1 D1.2.7.8 त्रिभिर्द्वाभ्यामेकतमेन वापि. Ca एकेनापि. — (L. 21) M स वेदितव्यः; Ca स महद्व्रतो वा; Cs च वेदितव्यं (as above). — (L. 22) K1 Ds2 D1.2.7.8 अप्रमादश्च (for अथाप्रमादः). K1 D5 D2.7 एतेष्वमृतमाहितं. — (L. 23) K1 D2.7.8 Cap.sp ब्रह्मजात्यानि; Ca.s ब्रह्ममुख्यानां (as above). — (L. 24) T G1.3–5 ब्राह्मणे न प्र(T2 G1 °णेन न)-शस्यते. — (L. 25) Hypermetric! B1.3–5 Dn D5 D3–7 M2.4 om. वै. T G1.3–5 M3.5 च; M1 हि (for वै). B2 D1 नरकस्य प्रतिष्ठास्ते. K1 D8 य एनं; G5 असूयां. B3 Dn2 कुरुते (for कुर्वते). K1 D8 सदा; Dn D1.2 जनाः (for नराः). — (L. 26) K1 T1 G5 M दमः (for मदः). K1 B1.2.5 D5 D1–4.6.7.8 स्यात् (for स). K4 Dn2 D1.3.4 पुरा यो न; B2 D5 D8 Cs पुरा योत्र; D6.7 पुरा यो नः (for स्यात्पुरा यः). K4 B2 Dn2 D5 D1.3–5.7.8 Cs प्रकीर्तितः; Cn [अ]प्रकीर्तितः (as above). K1 B1.5 D2 पुरा योनुप्रकी(B5 °व)र्तितः; T G1.3–5 M लोमशेन प्रकीर्तिताः (T1 G1.5 °तः; M1.3–5 °तं). — (L. 27) K1 D8 T1 G5 M1 लोकद्वेषः; K4 M2–5 °द्वेषं; B (except B3) D6 G3 Cs °द्विष्टं; D1.3.5 °द्वेष्यः (for °द्वेष्यं). — (L. 28) D1 कामं क्रोधं; D8 कामः क्रोधः. K1 D7.8 पराधैन्यं; K4 D1.2 T G1.4.5 M Cs पराधीन्यं; G3 परौ नित्यं (for पारतन्त्र्यं). — (L. 29) B Dn D5 D3–6 Ca.s विवादश्च (for विवित्सा च). — (L. 30) B3 Dn D3–6 Cn मोदः (for मोहः). D2.7.8 विवादः; T G1.3–5 M [ऽ]ति(T1 °भि)मानः; Cn अतिवादः (as above). Dn1 मिथ्या ईर्ष्यातिवादश्च. B3 D7.8 G3 M1.4 अभ्यसूयता; T ह्यनार्यता; G1.4.5 [अ]प्यनार्यता; Cs as above. — (L. 31) K1 D1.2 मन्येत; Cs माद्येत (as above). T G1.3–5 M सतां (for सदा). — (L. 32) D2 सुहृदः; Cs सौहृदं; Ca as above. — (L. 33) K1 D1 T1 G3–5 प्रहृष्यंति; Ca.s हृष्यंति (as above). K1 B3 व्यथंति; D7 व्यथेत; Ca.s as above. M (except M1) प्रियं प्राप्य न व्यथते कदाचित्. — (L. 34) D5 Cs आत्मने; D5.6 आत्मानं; T1 आत्मना; Ca आत्मनः (as above). K1.4 B3 Dn1 D5 D3.4.6 m.s

नैतेन बालोऽमृतमभ्येति राज-
न्रतिं चासौ न लभ[illegible] ।
तूष्णीमेक उपासीत चेष्टेत मनसापि न ।
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्जयेत् ।
अत्रैव तिष्ठन्क्षत्रिय ब्रह्माविशति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ।

Colophon.

3

After 5. 62. 5, N (K2.3 missing) ins.:

यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ।
अता[illegible]लेव जले बाहुभिर्मामका रणे ।
पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान् ।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ।
विदुर उवाच ।
इह निःश्रेयसं प्राहुर्वृद्धा नि[illegible]ः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ।
तस्य दानं क्षमा सिद्धिर्यथावदुप[illegible] ।
दमो दानं तपो ज्ञानमधीतं चानुवर्तते ।
दमस्तेजो वर्धयति पवित्रं दम उत्तमम् ।
विपाप्मा वृद्धतेजा[illegible] पुरुषो विन्दते महत् ।
क्रव्याद्भ्य इव [illegible]नामदान्तेभ्यः सदा भयम् ।
तेषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ।
आश्रमेषु चतुर्ष्वा[illegible]दममेवोत्तमं व्रतम् ।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ।
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रि[illegible]याभिजयो धैर्यं मार्दवं ह्रीरचापल[illegible] ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ।
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते ।
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम् ।
अलोलुपस्तथाल्पेप्सुः कामानामविचिन्तिता ।
समुद्रकल्पः पुरुषः स दान्तः प[illegible]तितः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्मात्मविद्बुधः ।
प्राप्येह लोके संमानं सुगतिं प्रेत्य गच्छति ।
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
स वै प[illegible]णतप्र[illegible]ः प्रख्यातो मनुजोत्तमः ।

---

C3 विंदति (for लभति). D5 कामकाले; Ca.3 अन्तकाले (as above). — (L. 56) K4 भूतं; B1 D2.5.6.8 Ca एकं; B3 एतं; B5 एतत्; G3 भूतः; C3 एकः (as above). K1 D8 न चेष्टेत्; D5 चेष्टते (for चेष्टेत). K1 B3.5 D8 च (for न). D1.2 T1 M न चेष्टेन्मनसा अ(D1 त्व)पि; D7 T2 G1.3-5 न चेष्टेन्मनसा अ(D7 ह्य)पि. — (L. 57) K1 D1.3 अथ; T G1.3-5 M अपि (for तथा). T G1.3-5 प्रीतिद्वेषौ. — (L. 58) B1 D2.4 क्षत्रियोपि; G1.4 वसति (for क्षत्रिय). K1.4 B1-3 D5 D1.3 G3 M Ca.3 [आ]वसति (for [आ]विशति). T2 (m as above) तिष्ठति; Ca पश्यति (as above). G1.4 क्षत्रियो ब्रह्म पश्यति (for the posterior half). — (L. 59) Ds2 D6.3 G3 आनुपूर्वेण; Ca as above. M1 विद्वंस्त्वं (for एतद्विद्वन्). B3 विप्र; D2 ब्रह्म (for विद्वन्). — Colophon. *Adhy. no.:* K1 T2 G3 45; Dn D8 4; D5 44; D6 41; D7 T1 G1.2.4 M 46.

☞ Almost all the lines are either repetitions or variants of verses already occurring in adhy. 42, 43 and 44, as may be seen from the foll. statement: Lines 1–23 = (var.) 5. 43. 8–14. — Line 26 = (var.) 263*. — Lines 27–31 = (var.) 262*. — Lines 32–40 = (var.) 5. 43. 18–20. — Line 42 = (var.) 5. 43. 22^cd. — Lines 43–46 = (var.) 5. 43. 26^cd–27^ef. — Lines 48–51 = (var.) 5. 44. 24. — Lines 54–55 = (var.) 5. 44. 16^cd. — Line 56 = (var.) 5. 43. 34^ab. — Line 58 = (var.) 5. 42. 24^cd. — Line 59 = (var.) 5. 43. 37^cd.

3

K5 om. lines 1–4. — (L. 1) K1 D1.5-8 Cn परिहरिष्यंति; D10 °भविष्यंति; C3 °भरिष्यंति; Ca as above. — (L. 3) K1.4 पश्यतः; D1 अपश्यन्. — (L. 4) B3 D1.2 सह (for स च). — (L. 5) D3.4.7 दमं (for इह). K5 D7.10 निश्चय° (for निश्चित°). — (L. 7) K1.4.5 B1.3 D1-4.7.9.10 दानक्रिया (for दानं क्षमा). — D1 om. lines 8–10. — (L. 9) K4 D3.4 उच्यते (for उत्तमम्). — The portion from line 10 up to st. 4 of adhy. 67 is missing in K5. — (L. 12) B Dn येषां (for तेषां). K1 D1.2.3.10 वि- (for च). — (L. 18) Om. in K1.4 B D (except D5.8). — (L. 19) Dn1 D1.2 Ca.3 मोहः (for दर्पः). K1 D7.10 कामं लोभं च मोहं च मन्युं निद्रां विकत्थनं. — (L. 20) K1 D7.10 मानमीर्ष्यां (D7 °र्ष्यं) च शोकं च. — (L. 22) K1 B1.2.3 D1.2.7.8.10 अल्पेच्छः. D5 D3-5.8 अविचिंतता. — (L. 23) K1 D7.10 सदा दांतः प्रकीर्तितः. — (L. 25) K1 Dn D7.8.10 सम्मानं (for संमानं). — (L. 26) K1 B (except B5) D1 सर्व- (for यस्य). — (L. 30) K1 D1.2.7.10 कर्म यत् (for कर्मणा), and पूर्वैः (for पूर्वं). — (L. 34) K1 D7.10

सर्वभूतहितो मैत्रस्तथा योऽभिजायते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ।
कर्मणाचरितं पूर्वं संनिधानं च यत् ।
तत्त्वाख्याय मोदन्ते दान्ताः शमपरायणाः ।
नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ।
शकुन्तानामिवाकाशे पदं नैवोपलभ्यते ।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते ।
उत्सृज्य वा गृहान्यस्तु मोक्षमेवाभिमन्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि ।

Colophon.

## 4

After 5. 90. 1^ab, K5 ins.:

यं सुरासुरा यमिच्छन्ति तपः कृत्वा त्वनेकधा ।
स देवोऽस्य समायातो मम लोचनगोचरे ।
तवातिथ्यं जगन्नाथ किं करोम्यद्य केशव ।
अहमस्मि महीपीठे निर्धनानां शिरोमणिः ।
कृष्ण उवाच ।
साधु साधु महाप्राज्ञ सत्यशील विशांपते ।
यस्त्वं विनयसंपन्नो वयस्त्वय्येव दृश्यते ।
तवाद्य वचसा तुष्ये ददामि कुरुनन्दन ।
वरं वृणीष्व दास्येऽहं यत्ते मनसि रोचते ।
विदुर उवाच ।
अचला केशवे भक्तिर्मानसं त्वद्गतं सदा ।
धर्मे चिन्ता कुले जन्म देहि मे मधुसूदन ।
मा मतिः परद्रव्येषु परदारेषु मा मतिः ।
परापवादिनी जिह्वा मा भूदेव कदाचन ।
आसनं श्रुतसंकीर्णं विप्रसंकीर्णमन्दिरम् ।
हृदयं शास्त्रसंकीर्णं देहि मे मधुसूदन ।
दुर्भिक्षे चान्नदाताहं सुभिक्षे च हिरण्यदः ।
आतुरेऽहं भयत्राता श्रीमन्कृष्ण भवन्तु मे ।
सत्यं शौचं दया दानं भक्तिश्चैव जनार्दने ।
एतान्वरानहं याचे यदि तुष्टोऽसि माधव ।

## 5

S^n (T2 om. lines 12–17; G2 om. lines 6–9 and 12–17) ins. after 5. 92. 11: K4 (om. lines 10–24), after 421*:

तस्मै रथवरो युक्तः शुशुभे लोकविश्रुतः ।
वाजिभिः सैन्यसुग्रीवमेघपुष्पबलाहकैः ।
सैन्यस्तु शुकपत्राभः सुग्रीवः किंशुकप्रभः ।
मेघपुष्पो मेघवर्णः पाण्डरस्तु बलाहकः ।
दक्षिणं चावहत्सैन्यः सुग्रीवः सव्यतोऽवहत् ।
पृष्ठवाहौ तयोरास्तां मेघपुष्पबलाहकौ ।
विश्वकर्मकृतापीडा रत्नजालविभूषिता ।
आश्रिता वै रथे तस्मिन्ध्वजयष्टिरशोभत ।
वैनतेयः स्थितस्तस्यां प्रभाकरमिव स्पृशन् ।
तस्य सत्त्ववतः केतौ भुजगारिरशोभत ।
तस्य कीर्तिमतस्तेन भास्वरेण विराजता ।
शुशुभे स्यन्दनश्रेष्ठः पतगेन्द्रेण केतुना ।
हेमजालैः पताकाभिः सौवर्णेन च केतुना ।
बभूव स रथश्रेष्ठः कालसूर्य इवोदितः ।
पक्षिभिर्बालिभिश्चैव रुक्मजालकृतान्तरैः ।
बहुभागविभागैश्च सुकृतैर्विश्वकर्मणा ।
प्रवालमणिहेमैश्च मुक्तावैडूर्यभूषणैः ।
किङ्किणीशतसंघैश्च बालजालकृतान्तरैः ।
कार्तस्वरमयीभिश्च पद्मिनीभिरलंकृतः ।
शुशुभे स्यन्दनश्रेष्ठः काञ्चनीयैश्च पादपैः ।
व्याघ्रसिंहवराहैश्च गोवृषैर्मृगपक्षिभिः ।
तारासिंहाश्वैश्चापि वारणैश्च हिरण्मयैः ।
वज्रायुधविमानैश्च कूबरावर्तसंधिषु ।
समुच्छ्रितमहानाभिः स्तनयन्निव तोयदः ।

## 6

After 5. 114. 2, D8 ins.:

पद्मदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिविस्तीर्णं त्रिगम्भीरं प्रशस्यते ।
पद्मेव दीर्घौ हंसः काञ्चनानि

---

शकुन्तानां यथाकाशे. K1 D1.2.7.10 प्रदृश्यते (for [उ]पलभ्यते). — (L. 35) Om. in D5. K1 D7 पुनर्जन्म न विद्यते (for the posterior half). — (L. 36) Om. in D7. B2.4 Dn2 [प]त्र (for वा). K1 D1.2.10 [अ]भिपद्यते; C8 [अ]भिमन्यते (as above). — Colophon. *Adhy. no:* K1 63; D5 59; D7 64.

5

(L. 3) K4 शैब्यस्तु (for सैन्यस्तु), and हेमसंनिभः (for किंशुक°). — (L. 5) T1 G1 [अ]वसत् (for [अ]वहत्). K4 शैब्यः (for सैन्यः). K4 T1 G1 [अ]भवत् (for ऽवहत्). — (L. 6) M2–5 पृष्ठतोऽभौ (for °वाहौ). — (L. 9) K4 महाबलपराक्रमः (for the posterior half). — (L. 16) T2 G2 रत्न° (for बाल°).

च ... समवृत्तानि ।
हस्तानि चत्वारि च ...
ग्रीवा च जङ्घे च ...समवृत्तानि ।
सूक्ष्माणि पञ्च दशना ... लिपर्वकेशा-
स्त्वक्चैव वै करुहाश्च ...
वक्षोऽथ क... नासिकाल्य-
मंसाग्निकं चेति षडुन्नतानि ।
नेत्रान्तपादकरतालवधरोष्ठजि...
रक्ता नखाश्च खलु सर्वसुखावहानि ।

[ Lines 3–12 are a gloss on the preceding 2 lines. ]

7

After 5. 128. 17, T G ins.:

यथा वाराणसी दग्धा साश्वा सरथकुञ्जरा ।
सानुबन्धस्तु कृष्णेन काशी... हतः ।
तथा नागपुरं दग्ध्वा शङ्खचक्रगदाधरः ।
स्वयं कालेश्वरो भूत्वा नाशयिष्यति कौरवान् ।
पारिजात...रं क्षेममेकं यदुसुखावहम् ।
नाभ्यवर्तत संरब्धो वृत्रहा वसुभिः सह ।
प्राग्ज्योतिषे पाशान्... ।
हतास्ते वासुदेवेन ...पसंक्रम्य कौरवान् ।
द्वारमासाद्य सौभस्य विधूय गदया गिरिम् ।
द्युमत्सेनः सहामात्यः कृष्णेन विनिपातितः ।
शेषवत्स्व...कर्मा तु धर्मापेक्षी तथाच्युतः ।
क्षमते पुण्डरीकाक्षः शक्तः ... ।
एते हि यदि गोविन्द... सह राजभिः ।
अद्यैवातिथयः सर्वे भविष्यन्ति यमस्य ते ।
यथा वा... प्राणि वशं यान्ति बलीयसः ।
तथा चक्रभृतः सर्वे वशमेष्यन्ति कौरवाः ।

8

After 5. 129. 13, D8 ins.:

धृतराष्ट्राय प्रददौ भगवान्दिव्यचक्षुषी ।
ददर्श परमं रूपं धृतराष्ट्रोऽम्बिका...तः ।
ततो देवाः सगन्धर्वाः किंनराश्च महोरगाः ।
ऋषयश्च म... लोकपालैः ...न्विताः ।
प्रणम्य शिरसा देवं तुष्टुवुः प्राञ्जलि स्थिताः ।
क्रोधं प्रभो संहर संहर स्वं
रूपं च यद्दर्शितमात्मसंस्थम् ।
यावत्त्विमे देवगणैः समेता
लोकाः समस्ता भुवि नाशमीयुः ।
त्वं च कर्ता विकर्ता च त्वमेव परिरक्षसे ।
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ।
... महीपालाः किंवीर्याः ...।
येषामर्थे महाबाहो दिव्यं रूपं प्रदर्शित... ।
एवमुच्चारिता वाचः सह देवैर्विभुस्तथा ।

9

After 5. 157. 5, K4 B Dn1 D8 D1. 3. 4. 6–8. 10 ins.:

*The Fable of the Cat and the Mice*

ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम ।
भ्रातृभिः सहितः सर्वैः सोमकैश्च सकेकयैः ।
कथं वा धार्मिको भूत्वा त्वमधर्मे मनः कृथाः ।
य इच्छसि जगत्सर्वं नश्यमानं नृशंसवत् ।
अभयं सर्वभूतेभ्यो दाता त्वमिति मे मतिः ।
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ ।
प्रह्लादेनाथ भद्रं ते हृते राज्ये तु दैवतैः ।
यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ।
अत्र ते वर्तयिष्यामि ...मुत्तमम् ।
कथितं नारदेनेह पितुर्मम नराधिप ।
मार्जारः किल दुष्टात्मा निश्चेष्टः सर्वकर्मसु ।
ऊर्ध्वबाहुः स्थितो राजन्गङ्गातीरे कदाचन ।
स वै कृत्वा मनःशुद्धिं प्रत्ययार्थं शरीरिणाम् ।
करोमि धर्ममित्याह सर्वानेव शरीरिणः ।
तस्य कालेन महता विश्रम्भं ...ण्डजाः ।
समेत्य च प्रशंसन्ति मार्जारं तं विशां पते ।
पूज्यमानस्तु तैः सर्वैः पक्षिभिः पक्षिभोजनः ।
आत्मकार्यं कृतं मेने चर्यायाश्च कृतं फलम् ।
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः ।
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम् ।
कार्येण महता युक्तं दम्भयुक्तेन भारत ।
तेषां मतिरियं ... विनिश्चये ।
बहुमित्रा वयं सर्वे तेषां नो मातुलो ह्ययम् ।
रक्षां करोतु सततं वृद्धबालस्य सर्वशः ।
उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ।
... र्तुं चैव यथासुखम् ।
भवान्नो गतिरव्यग्रा भवान्नः परमः सुहृत् ।
ते वयं सहिताः सर्वे भवन्तं शरणं गताः ।

7

(L. 1) T2 नृपावरथकुंजराः. — (L. 5) T1 G1. 3 कृष्णं (for यकं). — (L. 16) T1 G3 च चक्रिणः (for चक्रभृतः).

9

(L. 1) B3 D8 वचनं (for °नात्). — (L. 22) D8 D7. 10 कार्येन (for कार्येण). — (L. 24) D8 D6. 7. 10 Cnp

भवान्धर्मपरो नित्यं भवान्धर्मे व्यवस्थितः ।
स नो रक्ष महाप्राज्ञ त्रि शालेन वज्रभृत् ।
एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशां पते ।
प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ।
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ।
अवश्यं तु मया कार्यं वचनं भवतां हितम् ।
युष्माभिरपि कर्तव्यं वचनं मम नित्यशः ।
तपसास्मि परिश्रान्तो दृढं नियममास्थितः ।
न चापि गमने शक्तिं कांचित्पश्यामि चिन्तयन् ।
सोऽस्मि नेयः सदा तात नदीकूलमितः सुखम् ।
तथेति तं प्रतिज्ञाय मूषिका भरतर्षभ ।
वृद्धबालमथो सर्वे मार्जाराय न्यवेदयन् ।
ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन् ।
पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ।
मूषिकाणां गणश्चात्र भृशं संक्षीयतेऽथ सः ।
मार्जारो वर्धते चापि तेजोबलसमन्वितः ।
ततस्ते मूषिकाः सर्वे समेत्यान्योन्यमब्रुवन् ।
मातुलो वर्धते नित्यं वयं क्षीयामहे भृशम् ।
ततः प्राज्ञतमः कश्चिड्डिण्डिको नाम मूषिकः ।
अब्रवीद्वचनं राजन्मूषिकाणां महागणम् ।
गच्छतां वो नदीतीरं सहितानां विशेषतः ।
पृष्ठतोऽहं गमिष्यामि सहैव मातुलेन तु ।
साधु साध्विति ते सर्वे पूजयांचक्रिरे तदा ।
चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ।
अविज्ञानात्ततः सोऽथ डिण्डिकं ह्युपभुक्तवान् ।
ततस्ते सहिताः सर्वे मन्त्रयामासुरञ्जसा ।
तत्र वृद्धतमः कश्चित्कोकिलो नाम मूषिकः ।
अब्रवीद्वचनं राजञ्ज्ञातिमध्ये यथातथम् ।
न मातुलो धर्मकामश्छद्ममात्रं कृता शिखा ।
न मूलफलभक्षस्य विष्ठा भवति लोमशा ।
अस्य गात्राणि वर्धन्ते गणश्च परिहीयते ।
अद्य सप्ताष्टदिवसान्डिण्डिकोऽपि न दृश्यते ।
एतच्छ्रुत्वा वचः सर्वे मूषिका विप्रदुद्रुवुः ।
बिडालोऽपि स दुष्टात्मा जगामैव यथागतम् ।
तथा त्वमपि दुष्टात्मन्बैडालं व्रतमास्थितः ।
चरसि ज्ञातिषु सदा बिडालो मूषिकेष्विव ।
अन्यथा किल ते वाक्यमन्यथा कर्म दृश्यते ।
दम्भनार्थाय लोकस्य वेदाश्चोपशमश्च ते ।
त्यक्त्वा छद्म त्विदं राजन्क्षत्रधर्मं समाश्रितः ।
कुरु कार्याणि सर्वाणि धर्मिष्ठोऽसि नरर्षभ ।
बाहुवीर्येण पृथिवीं लब्ध्वा भरतसत्तम ।
देहि दानं द्विजातिभ्यः पितृभ्यश्च यथोचितम् ।
क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थितः ।
प्रमार्जाश्रु रणे जित्वा संमानं परमावह ।
पञ्च ग्रामा वृता यत्नान्नास्माभिरपवर्जिताः ।
युध्यामहे कथं संख्ये कोपयेम च पाण्डवान् ।
त्वत्कृते दुष्टभावस्य संत्यागो विदुरस्य च ।
जातुषे च गृहे दाहं स्मर तं पुरुषो भव ।
यच्च कृष्णाभवाचस्त्वमायान्तं कुरुसंसदि ।
अयमस्मि स्थितो राजन्शमाय समराय च ।
तस्यायमागतः कालः समरस्य नराधिप ।
एतदर्थं मया सर्वं कृतमेतद्युधिष्ठिर ।
किं नु युद्धात्परं लाभं क्षत्रियो बहु मन्यते ।
किं च त्वं क्षत्रियकुले जातः संप्रथितो भुवि ।
द्रोणादस्त्राणि संप्राप्य कृपाच्च भरतर्षभ ।
तुल्ययोनिः समबले वासुदेवं समाश्रितः ।
ब्रूयास्त्वं वासुदेवं च पाण्डवानां समीपतः ।
आत्मार्थं पाण्डवार्थं च यत्तो मां प्रतियोधय ।

बहुमित्रा. $D_1$ ह्यसि (for ह्ययं). — (L. 29) $D_8$ भवतः (for °न्तं). — (L. 31) $K_4$ $Dn_1$ $D_{1.7.10}$ महाप्राज्ञ. — (L. 35) $B_4$ $D_1$ transp. वचनं and भवतां. $D_8$ $D_7$ भवतां रक्षणं हितं (for the posterior half). — (L. 39) $K_4$ $B_{3.5}$ $Dn_1$ $D_{1.7.8}$ तात. $Dn_1$ $D_8$ परं (for सुखं). — (L. 40) $D_8$ $D_{1.7.8}$ ते; $D_{3.4.10}$ तत् (for तं). $B_3$ ते तथेति विनिश्चित्य (for the prior half). — (L. 41) $B_{1.3.4}$ $Dn_1$ सर्वं. — (L. 42) $K_4$ $D_{3.4.7}$ [अ]पि; $B_3$ तान् (for [अ]थ). $B_3$ अभक्षयत्. — (L. 48) $K_4$ $B_{1-3}$ $Ds_1$ $D_{3.4.6}$ तत्र (for ततः). $Dn_1$ दंडिकः; $D_8$ दिणिकः; $D_7$ दिंडिकः. — (L. 55) $D_8$ $D_7$ वा (for वो). — (L. 51) $D_8$ $D_7$ ते (for तु). $B_3$ transp. सहैव and मातुलेन. — (L. 53) $K_4$ $D_8$ $D_{3.4.7.10}$ ऊचुः (for चक्रुः). $Dn_1$ दंडिकस्य; $D_8$ तिणिकस्य; $D_7$ दिंडिकस्य (for डिण्डि°). — (L. 54) $K_4$ $Dn_1$ $D_8$ $Ca$ उपयुक्तवान् (for °भुक्तवान्). — (L. 58) $B_{2.3}$ transp. कृता and शिखा. $Dn_1$ $D_{1.8}$ छद्ममात्रकृता शिखा (for the posterior half). — (L. 60) $B_{3.5}$ $D_1$ अंगानि त($D_1$ चा)स्य वर्धते (for the prior half). — (L. 61) $D_8$ $D_7$ transp. [अ]पि and न. — (L. 64) $D_8$ $D_{3.4.7}$ बैडालव्रतम्. — (L. 67) $D_8$ $D_7$ दंभमास्थाय (for °नार्थाय). — (L. 68) $D_{3.4.7.10}$ छद्ममिदं; $Cn$ छद्म इदं. $D_{3.4.10}$ समास्थितः (for °श्रितः). — (L. 69) $D_{3.4}$ transp. कार्याणि and सर्वाणि. — (L. 72) $B_3$ $D_1$ संमानय च बांधवान् (for the posterior half). — (L. 74) $K_4$ $D_8$ अपि वर्जिताः; $Ca$ अप° (as above). — (L. 75) $D_{7.10}$ वयं° (for कथं). — (L. 77) $Ds_1$ $D_{3.4}$ संस्मरन्; $D_7$ स्मरन् त्वं (for स्मर तं). — (L. 79) $B_{3.5}$ $D_1$ transp. शमाय and समराय. — (L. 81) $K_4$ $D_8$ $D_{3.4.7.10}$ सार्धं (for सर्वं).

सभामध्ये च यद्रूपं मायया [illegible]
तथैव पुनः कृत्वा सार्जुनो मामभिद्रव ।
इन्द्रजालं च मायां वै कुहका वापि भीषणा ।
आत्तशस्त्रस्य संग्रामे वहन्ति [illegible] ।
वयम[illegible]न्तर्हिताः खं च गच्छेम मायया ।
रसातलं [illegible]ऽऽपि वैश्मं वा पुरमेव तु ।
दर्शयेम च रूपाणि स्वशरीरे बहून्यपि ।
न तु पर्यायतः सिद्धिर्बुद्धिमाप्नोति मानुषीम् ।
मनसैव हि भूतानि धातैव कुरुते वशे ।
यद्ब्रवीषि च वार्ष्णेय धार्तराष्ट्रानहं रणे ।
घातयित्वा [illegible] पार्थेभ्यो राज्यमुत्तमम् ।
आचचक्षे च मे सर्वं संजयस्तव भाषितम् ।
मद्द्वितीयेन पार्थेन वैरं वः सव्यसाचिना ।
स [illegible] भूत्वा पाण्डवार्थे पराक्रमी ।
युध्यस्वाद्य रणे यत्तः पश्यामः पुरुषो भव ।
यस्तु शत्रुमभिज्ञाय शुद्धं प[illegible]तः ।
करोति द्विषतां शोकं स जीवति सुजीवितम् ।
अकस्मादेव ते कृष्ण ख्यातं लोके महद्यशः ।
अद्येदानीं विजानीमः सन्ति षण्ढाः सशृङ्गकाः ।
मद्विधो नापि नृपतिस्त्वयि युक्तः कथंचन ।
सज्जाहं संयुगे कर्तुं कंसभृत्ये विशेषतः ।,

which is followed by 5. 157. 16.

[ For the fable, cf. Bilāra-jātaka (ed. Fausboll, vol. 1, pp. 460–61), presenting a jackal (unaccountably substituted for the cat), which similarly pretends asceticism to beguile a troop of rats. ]

## 10

After 5. 157. 17 (which is transposed), $K_4$ B $D_{n1}$ $D_5$ $D_1$ (om. lines 1–6). 8. 4. 6–8. 10 ins.:

यद्ब्रवीषि च कौन्तेय धार्तराष्ट्रानहं रणे ।
[illegible] निष्यामि तरसा तस्य कालोऽयमागतः ।
त्वं हि भोज्ये पुरस्कार्यो भक्ष्ये पेये च भारत ।
क युद्धं क च भोक्तव्यं युध्यस्व पुरुषो भव ।
शयिष्यसे हतो भूमौ गदा[illegible] भारत ।
तद्वृथा च सभामध्ये वल्गितं ते वृकोदर ।
उलूक नकुलं ब्रूहि वचनान्मम भारत ।
युध्यस्वाद्य स्थिरो भूत्वा प[illegible]श्याम पौरुषम् ।
युधिष्ठिरानुरागं च द्वेषं च मयि भारत ।
कृष्णायाश्च परिक्लेशं स्मरेदानीं यथातथम् ।
ब्रूयास्त्वं सहदेवं च राजमध्ये वचो मम ।
युध्येदानीं रणे यत्तः [illegible]क्लेशान्स्मर च पाण्डव ।
विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचना[illegible] ।
न दृष्टपूर्वा भर्तारो भृत्यैरपि महागुणैः ।
तथार्थपतिभिर्भृत्या यतः सृष्टाः प्रजास्ततः ।
अश्लाघ्योऽयं नरपतिर्युवयोरिति चागतम् ।
ते यूयं संहता भूत्वा तद्वधार्थं ममापि च ।
आत्मार्थं [illegible] च प्रयुध्यध्वं मया सह ।
धृष्टद्युम्नं च पाञ्चाल्यं ब्रूयास्त्वं वचन[illegible] ।
एष ते समयः प्राप्तो लब्धव्यश्च त्वयापि सः ।
द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमम् ।
युध्यस्व स[illegible]हृत्पापं कुरु कर्म सु[illegible]करम् ।
शिखण्डिनमथो ब्रूहि उलूक वचनान्मम ।
स्त्रीति मत्वा महाबाहुर्न हनिष्यति कौरवः ।
गाङ्गेयो धन्विनां श्रेष्ठो युध्येदानीं सुनिर्भयम् ।
कुरु कर्म रणे यत्तः पश्यामः पौरुषं तव ।
एवमुक्त्वा ततो राजा प्रहस्योलूकमब्रवीत् ।
धनंजयं पुनर्ब्रूहि वासुदेवस्य शृण्वतः ।

## 11

After 5. 157. 18 (which is a variant of 5. 158. 11), $K_4$ B $D_{n1}$ $D_5$ $D_{6.8.10}$ read for the first time 5. 158. 12–41 (with v.l. and ins.), *repeating* the

---

— (L. 82) $D_{5.6}$ पुत्रात् (for युद्धात्). $B_3$ नानु-; $B_5$ [अ]प्यनु- (for बहु). — (L. 83) $D_{n1}$ $D_{s1}$ $D_{10}$ संप्रथिते; $D_{5.6}$ संप्रार्थितो. — (L. 86) $K_4$ $D_5$ धर्मराजसमीपतः (for the posterior half). — (L. 87) $K_4$ $B_3$ $D_{5.6.8}$ आत्मानं (for °र्थं). — (L. 90) = (var.) 5. 158. $35^{ab}$. $B_{1.2.4}$ न (for च). $K_4$ $D_{5.6.8}$ कुहको (for °का). $B_{1.2}$ $D_5$ [अ]पि भीषणी; $B_3$ $D_5$ $D_{1.10}$ विभीषणी; $D_{5.6}$ विभीषिका (for [अ]पि भीषणा). — (L. 91) = (var.) 5. 158. $35^{cd}$. — (L. 95) $D_{n1}$ Cnp ननु; $D_1$ न हि; Cn न तु (as above). — L. 95–96 = (var.) 5. 158. 26. — L. 100 = (var.) 5. 58. $22^{cd}$.

### 10

(L. 4) $D_{s1}$ $D_7$ क्षत्रियो (for पुरुषो). — (L. 16) $K_4$ $D_{5.6.7.10}$ अहं (for अयं). — (L. 17) $B_{2.3}$ $D_7$ सहिता (for संहता). — (L. 21) $D_5$ $D_7$ आगम्य (for आसाद्य). — (L. 22) $K_4$ चार्थं; $B_{3.4}$ $D_{n1}$ $D_5$ $D_{7.8.10}$ Cnp स्वार्थं; $D_{5.6}$ पार्थं; Cn पापं (as above). — (L. 25) $D_{5.6.10}$ युध्यतां; $D_7$ धर्मिणां; $D_8$ रथिनां (for धन्विनां): $B_4$ स्थिरो भव (for सुनिर्भयम्). — (L. 26) $B_3$ $D_1$ कुरु कर्माणि संयुक्तः ($D_1$ °यत्तः) (for the prior half). $B_{1.3.4}$ पश्यामि पुरुषो भव (for the posterior half).

passage in its proper place:

असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ।
एवं कत्थसि कौन्तेय अकत्थन्पुरुषो भव ।
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ।
द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि ।
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ।
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकधरमच्युतम् ।
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ।
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् ।
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् ।
को ह्यस्ति जीविताकाङ्क्षी मामासाद्यारिमर्दनम् ।
पार्थो वा इतरो वापि कोऽन्यः स्वस्ति गृहान्व्रजेत् ।
कथमाभ्यामभिध्यातः संस्पृष्टो दारुणेन वा ।
रणे जीवन्प्रमुच्येत पदा भूमिमुपस्पृशन् ।
किं दर्दुरः कूपशयो यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ।
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्बोजशकैः खशैश्च ।
शाल्वैः समत्स्यैः कुरुमध्यदेश्यै-
र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ।
नानाजनौघं युधि संप्रवृद्धं
गाङ्गं यथा वेगमपारणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ।
अक्षय्याविषुधी चैव अग्निदत्तं च ते रथम् ।
जानीमो हि रणे पार्थ केतुं दिव्यं च भारत ।
अकत्थमानो युध्यस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्यति कत्थनात् ।
यदीदं कत्थनाल्लोके सिध्येत्कर्म धनंजय ।
सर्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः ।
जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्यहं त्वादृशो नास्ति योद्धा
जानानस्ते राज्यमेतद्धरामि ।
न तु पर्यायधर्मेण सिद्धिं प्राप्नोति मानवः ।
मनसैवानुकूलानि धातैव कुरुते वशे ।
त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम् ।
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन ।
सगदाद्भीमसेनाद्वा फाल्गुनाद्वा सगाण्डिवात् ।
न वै मोक्षस्तदा वोऽभूद्विना कृष्णामनिन्दिताम् ।
सा वो दास्ये समापन्नान्मोचयामास पार्षती ।
अमानुष्यं समापन्नान्दास्यकर्मण्यवस्थितान् ।
अवोचं यत्षण्ढतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ।
सूदकर्मणि विश्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ।
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
वेणीं कृत्वा षण्ढवेषः कन्यां नर्तितवानसि ।
न भयाद्वासुदेवस्य न चापि तव फाल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ।
न माया हीन्द्रजालं वा कुहका वापि भीषणाः ।
आत्तशस्त्रस्य संग्रामे वहन्ति प्रतिगर्जनाः ।
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ।
संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् ।
तरस्व वा महागाधं बाहुभ्यां पुरुषोदधिम् ।
शारद्वतमहामीनं सोमदत्तितिमिंगिलम् ।
भीष्मवेगमपर्यन्तं द्रोणग्राहदुरासदम् ।
कर्णशल्यझषावर्तं काम्बोजवडवामुखम् ।
दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ।
शस्त्रौघमक्षय्यमभिप्रवृद्धं
यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव-
स्तदा मनस्ते परितापमेष्यति ।
तदा मनस्ते त्रिदिवादिवाशुचे-
र्निवर्तिता पार्थ महीप्रशासनात् ।
प्रशाम्य राज्यं हि सुदुर्लभं त्वया
बुभूषितः स्वर्ग इवातपस्विना ।

Colophon.

## 12

After 5. 159. 6, $K_4$ B $Dn_1$ $D_5$ $D_{4.6-8.10}$ ins.:

एवमुक्त्वा महाबाहुः केशवो राजसत्तम ।
पुनरेव महाप्राज्ञं युधिष्ठिरमुवाच ह ।
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ।
द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ।
उलूकोऽप्यर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।

[illegible]शीविषमिव क्रुद्धं [illegible]काकथा ।
[illegible]व्यादीमिव तान्सर्वान्वयो[illegible] वाक्यमब्रवीत् ।
उलूकस्य तु तद्वाक्यं पापं दारुणमीरित[illegible] ।
श्रुत्वा विचुक्षुभे पार्थो ललाटं च [illegible] ।
तदवस्थं तदा दृष्ट्वा पार्थं सा समिति[illegible] ।
नामृष्यन्त महाराज पाण्डवानां महारथाः ।
अधिक्षेपेण कृष्णस्य पार्थस्य च महात्मनः ।
श्रुत्वा ते पुरुषव्याघ्राः क्रोधाज्जज्वलुर[illegible]ताः ।
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ।
द्रौपदेयाभिमन्युश्च धृष्टकेतुश्च पार्थिवः ।
भीमसेनश्च विक्रान्तो यमजौ च महारथौ ।
उत्पे[illegible]रासनात्सर्वे क्रोधसंरक्तलोचनाः ।
बाहून्प्रगृह्य रुचिरान्रक्तचन्दनरूषितान् ।
अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषितान् ।
दन्तान्दन्तेषु निष्पिष्य सृक्किणी परिलेलिहन् ।
तेषामाकारभावज्ञः कुन्तीपुत्रो वृकोदरः ।
उदतिष्ठत्स वेगेन क्रोधेन प्रज्वलन्निव ।
उद्वृत्य सहसा नेत्रे दन्तान्कटकटाय्य च ।
हस्तं हस्तेन निष्पिष्य उलूकं वाक्यमब्रवी[illegible] ।
अश[illegible] [illegible]थास्माकं प्रोत्सा[illegible] ।
श्रुतं ते वचनं मूर्ख यत्त्वां दुर्योधनोऽब्रवीत् ।
तन्मे कथयतो मन्द शृणु वाक्यं दुरासदम् ।
सर्वक्षत्रस्य मध्ये त्वं यद्वक्ष्यसि सुयोधनम् ।
शृण्वतः सूतपुत्रस्य पितुश्च त्वं दुरात्मनः ।
अस्माभिः प्रीतिकामैस्तु [illegible] नित्यशः ।
मर्षितं ते दुराचार तत्त्वं न बहु मन्यसे ।
प्रेषितश्च हृषीकेशः शमाका[illegible] कुरून्प्रति ।
कुलस्य हितकामेन धर्मराजेन धीमता ।
त्वं कालचोदितो नूनं गन्तुकामो यमक्षयम् ।
गच्छस्व[illegible] [illegible]मिस्तच्च श्वो भविता ध्रुवम् ।
मयापि च प्रतिज्ञातो वधः सभ्रातृकस्य ते ।
स तथा भविता पाप नात्र कार्या विचारणा ।
[illegible]तिक्रमेत्सद्यः सागरो वरुणालयः ।
पर्वताश्च विशीर्येर[illegible]र्वाक्यं न मृषा भवेत् ।
सहायस्ते यदि यमः कुबेरो रुद्र एव वा ।
यथाप्रतिज्ञं दुर्बुद्धे प्रक[illegible]ष्यन्ति पाण्डवाः ।
दुःशासनस्य रुधिरं पाता चास्मि यथेप्सितम् ।
यश्चेह प्रतिसंरब्धः क्षत्रियो माभियास्यति ।
अपि भीष्मं पुरस्कृत्य तं नेष्यामि यमक्षयम् ।
यच्चैतदुक्तं वचनं मया क्षत्रस्य संसदि ।
यथैतद्भविता सत्यं तथैवात्मानमालभे ।
भीमसेन[illegible]चः श्रुत्वा सहदेवोऽप्यमर्षणः ।
क्रोधसंरक्तनयनस्ततो वाक्य[illegible]वाच ह ।
शौटीर[illegible]रसंहृष्टमनीकजनसंस[illegible] ।
शृणु पाप वचो मह्यं यद्वाच्यो हि पिता त्वया ।
नास्माकं भविता भेदः कदा[illegible]भिः सह ।
धृतराष्ट्रस्य संबन्धो यदि न स्यात्त्वया सह ।
त्वं तु लोकविना[illegible]य धृतराष्ट्र[illegible] च ।
उत्पन्नो वैरपुरुषः स्वकुलस्य च पापकृत् ।
जन्मप्रभृति चास्माकं पिता ते पापपूरुषः ।
अहितानि नृशंसानि नित्यशः क[illegible]र्तुमिच्छति ।
तस्य वैरानुषङ्गस्य गन्तास्म्यन्तं सुदुर्गमम् ।
अहमादौ निहत्य त्वां शकुनेः संप्रपश्यतः ।
ततोऽस्मि शकुनिं हन्ता मिषतां सर्वधन्विनाम् ।
भीमस्य वचनं श्रुत्वा सहदेवस्य चोभयोः ।
उवाच फाल्गुनो वाक्यं भीमसेनं स्मयन्निव ।
भीमसेन न ते सन्ति येषां वैरं त्वया सह ।
मन्दा गृहेषु सुखिनो मृत्[illegible]पाशवशं गताः ।
उलूकश्च न ते वाच्यः परुषं पुरुषोत्तम ।
दूताः [illegible]न्ते यथाकल्या[illegible] भाषिणः ।
एवमुक्त्वा महाबाहुं भीमं भीमपराक्रमम् ।
धृष्ट[illegible]प्रमुखान्वीरान्सुहृदः समभाषत ।
श्रुतं वस्तस्य पापस्य [illegible] भाषितम् ।
कुत्सना वासुदेवस्य मम चैव विशेषतः ।
श्रुत्वा भवन्तः संरब्धा अस्माकं [illegible]काम्यया ।
प्रभावाद्वा[illegible]देवस्य भवतां च प्रयत्नतः ।
समग्रं पार्थिवं क्षत्रं सर्वं न गणयाम्यहम् ।
भवद्भिः समनुज्ञातो वाक्यमस्य यदुत्तरम् ।
उलूके प्रापयिष्यामि यद्वक्ष्यामि सुयोधनम् ।

12

With lines 3–5, cf. 5. 158. 4c–5d; lines 6—7 =(var.)5. 159. 1. — (L. 18) D5 D7 यमौ चैव (for यमजौ च). — (L. 20) K4 B2.3 D5 D6–8 स्वभुजान्; Dn1 D10 सुभुजान् (for रुचिरान्). D3.4.7 °भूषितान् (for °रूषि°). — (L. 27) K4 B1–3 D5 D3.4.6–8.10 °निमिषेजं. — (L. 30) B D5 तं (for त्वं). — (L. 31) D3.4 भ्रातुर्वा; D7 °रैः सु- (for पितुश्च त्वं). — (L. 32) K4 D3.4.6.8 शासनात् (for नित्यशः). — (L. 38) B (except B4) च (for ते). — (L. 42) K4 D3.4.8 च (for वा). — (L. 51) K4 Dn1 D3.4.6–8.10 शौंडीरमुरसंहृष्टं. — (L. 53) D5 D7 मा (for न). — (L. 55) B' (except B3) हि (for तु). — (L. 56) D3.4 वै कुपुरुषः (for वैरपु°). — (L. 59) D5 D7 गंताशु (for °स्मि°). K4 सुदुर्गतं; D6.8 °र्दुर्गं (for °र्गमम्). — (L. 60) B (except B3) आजौ (for आदौ). — (L. 62) K4 B3

श्वोभूते कथ्यितस्तात [illegible] चमूमुखे ।
गाण्डीवेनाभिधास्यामि क्लीबा हि वचनात्त [illegible] ।
ततस्ते पार्थिवाः सर्वे प्र[illegible] ।
तेन वाक्योपचा[illegible] विस्मिता राजसत्तमाः ।
अङ्गुलीय च तान्सर्वान्य[illegible] यथावयः ।
धर्मराजस्त[illegible] वाक्यं तथ्यार्थं प्रत्यभाषत ।
आत्मान[illegible] न हि स्यात्पार्थिवोत्तमः ।
तत्रोत्तरं प्रवक्ष्यामि तव शुश्रूषणे रतः ।
उलूकं भरतश्रेष्ठ सामपूर्वमथोर्जित[illegible] ।
दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभ ।
अतिक्रो[illegible] तनेत्राभ्यामाशीवि[illegible] इव श्वसन् ।
स्मयमान इव क्रोधा[illegible] पणी परिसंलिह[illegible] ।
जना[illegible] नमभिप्रेक्ष्य [illegible] ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ।
उलूक गच्छ कैतव्य ब्रूहि तात सुयोधनम् ।
कृतघ्नं वैरपुरुषं दुर्मतिं कुलपांसन[illegible] ।
पाण्डवेषु सदा पाप नित्यं जिह्मं प्रवर्तसे ।
[illegible]वीर्याच्चः पराक्रम्य पाप आह्वयसे परान् ।
अभीतः [illegible] वै क्षत्रियः पुमान् ।
स पाप क्षत्रियो भूत्वा अस्मान[illegible] च संयुगे ।
[illegible] युद्धं मा गाः कुलाधम ।
आत्मवीर्यं समाश्रित्य भृत्यवीर्यं च कौरव ।
आह्वयस्व रणे पार्थान्सर्वथा क्षत्रियो भव ।
परवीर्यं [illegible] यः [illegible] परान् ।
अशक्तः स्वय[illegible] नैतदेव नपुंसकम् ।
यस्त्वं परेषां वीर्येण आत्मानं बहु मन्यसे ।
कथमेवमशक्तस्त्वमस्मान्समभिगर्जसि ।

## 13

After 5. 160. 23, $K_4$ B $Dn_1$ $D_5$ $D_{6-8.10}$ ins.:

युधिष्ठिरोऽपि कैतव्य[illegible] लूकमिदमब्रवीत् ।
उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनम् ।
स्वेन वृत्तेन मे वृत्तं [illegible] त्वमर्हसि ।
उभयोरन्तरं वेद [illegible] कृताकृतमथापि ।
न चाहं कामये पापमपि [illegible] ।
किं पुनर्ज्ञाति[illegible] वधं कामयेयं कथंचन ।
एतदर्थं मया तात पञ्च ग्रामा वृताः पुरा ।
कथं तव सुदुर्बुद्धे न प्रेक्षे व्यसनं महत् ।
स त्वं [illegible] मूढभावाच्च कत्थसे ।
तथैव वासुदेवस्य न गृह्णासि हितं वचः ।
किं चेदानीं बहूक्तेन युध्यस्व सह बान्धवैः ।
मम विप्रियकर्तारं कैतव्य ब्रूहि कौरवम् ।
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथास्तु तत् ।
भीमसेन[illegible] वाक्यं भूय आह नृपात्मजम् ।
उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुष[illegible] ।
शठं नैकृतिकं पापं दुराचारं सुयोधनम् ।
गृध्रोदरे वा वस्तव्यं पुरे वा [illegible] ।
प्रतिज्ञातं मया यच्च सभामध्ये नराधम ।
कर्ताहं तद्वचः सत्यं सत्येनैव शपामि ते ।
दुःशासनस्य रुधिरं हत्वा पास्याम्यहं मृधे ।
सक्थिनी तव भङ्क्त्वैव हत्वा हि तव सोदरान् ।
सर्वेषां धार्तराष्ट्राणाम[illegible] मृत्युः सुयोधन ।
सर्वेषां राज[illegible] रसत्तम[illegible] ।
कर्मणा तोषयिष्यामि भूयश्चैव वचः शृणु ।
हत्वा सुयोधन त्वां वै सहितं सर्वसोदरैः ।
आक्रमिष्ये पदा मूर्ध्नि [illegible] राजस्य पश्यतः ।
नकुलस्तु ततो वाक्यमि[illegible] आह महीपते ।
उलूक ब्रूहि कौरव्यं धार्तराष्ट्रं सुयोधनम् ।
श्रुतं ते गदतो वाक्यं सर्वमेव यथातथम् ।
तथा कर्तास्मि कौरव्य यथा त्वमनुशासि माम् ।

---

$D_{6.8.10}$ भीमसेनस्य वचनं (for the prior half). — (L.67) B (except $B_3$) °वादिनः (for °भाषिणः). — (L. 68) B (except $B_3$) $Dn_1$ महाबाहुर्. — (L. 71) $B_{3-5}$ $Dn_1$ कुत्सनं (for °त्सना). — $D_4$ om. lines 73–103. — (L. 74) $K_4$ $D_5$ $D_{6-8.10}$ समस्तं (for समग्रं). — (L. 76) $D_7$ प्रेषयि° (for प्रापयि°). B (except $B_3$) वक्ष्यति (for वक्ष्यामि). — (L. 77) $K_4$ $B_3$ $D_{6.8}$ कथितस्त. — (L. 83) $K_4$ $B_3$ $D_5$ $D_{6.7.10}$ हिंस्यात् (for हि स्यात्). $K_4$ $D_5$ $D_{6.7}$ पार्थिवोत्तम; $D_8$ °वो रणे. — (L. 86) B (except $B_3$) $D_{10}$ भरतर्षभः. — (L. 90) Om. in $D_5$ $D_{7.10}$. $K_4$ B (except $B_3$) विपुलौ भुजौ (for विपुलं भुजम्). — (L. 93) $D_5$ $D_{7.10}$ यथा (for सदा). $B_4$ $D_5$ $D_{6.7.10}$ Cnp प्रवर्तसे (as above); the rest °ते. — (L. 94) = (var.) 5. 160. 3$^{ab}$. $K_4$ $Dn_1$ $D_6$ आहूयते (for आह्व°). — (L. 95) = (var.) 5. 160. 3$^{cd}$. — (L. 96) B (except $B_3$) $D_{6.8}$ पापः — (L. 98) $D_5$ अपि (for आत्म-). — (L. 99) $K_4$ $Dn_1$ $D_{6.8}$ आहूय च (for आह्वयस्व). — (L. 100) = 5. 160. 4$^{ab}$.

13

(L. 6) $D_5$ $D_7$ कामयेहं (for °येयं). — (L. 9) $B_4$ $D_5$ $D_{7.10}$ काल° (for काम°). — (L. 12) $D_5$ कैतवं (for कौरवं). — (L. 14) $K_4$ $D_{6.8}$ चाह (for आह). — (L. 25) $B_{3.4}$ $D_{7.8}$ सुयोधनं. $B_3$ सुहृद्भिः सह सोदरैः (for the posterior half). — (L. 28) $D_5$ $D_{7.8.10}$ कैतव्य (for कौरव्यं). — (L. 32) $D_5$ दुर्यो° (for सुयो°).

सहदेवोऽपि नृपते इदमाह वचोऽर्थवत् ।
सुयोधन मतिर्या ते दुर्मेधा ते भविष्यति ।
शोचिष्यसे महाराज स[illegible]मात्यसबान्धवः ।
इमं च क्लेशमस्माकं हृष्टो यत्त्वं निकत्थसे ।
[illegible] यदा वृद्धावुलूकमिद[illegible]चतुः ।
दासभावं नियच्छेव साधोरिति मतिः सदा ।
तौ च [illegible] वा पौरुषं यस्य यादृशम् ।
शिखण्डी तु ततो वाक्य[illegible]लूकमिदमब्रवीत् ।
वक्तव्यो भवता राजा पापेष्वभिरतः सदा ।
पश्य त्वं मां रणे राज[illegible]र्वाणं कर्म दारुणम् ।
यस्य वीर्यं समासाद्य मन्यसे विजयं युधि ।
तमहं प[illegible]तयिष्यामि रथात्तव पितामह[illegible] ।
अहं भीष्मवधात्सृष्टो नूनं धात्रा महात्मना ।
सोऽहं भीष्मं हनिष्यामि मिषतां सर्वधन्विना[illegible] ।
धृष्टद्युम्नोऽपि कैतव्य[illegible]लूकमिदमब्रवीत् ।
सुयोधनो मम वचो वक्तव्यो नृपतेः सुतः ।
अहं द्रोणं [illegible]निष्यामि सगणं सहबान्धवम् ।
कर्ता चाहं तथा कर्म यथा नान्यः करिष्यति ।
तमब्रवी[illegible]र्मराजः कारुण्यार्थं वचो महत् ।
नाहं ज्ञातिवधं राजन्कामयेयं कथंचन ।
तवैव दोषाद्दुर्बुद्धे सर्वमेतत्त्वनावृतम् ।
अवश्यं च मया कार्यं सर्वेषां चरितं महत् ।
स गच्छ माचिरं तात उलूक यदि मन्यसे ।
इह वा तिष्ठ भद्रं ते वयं हि तव बान्धवाः ।
उलूकस्तु ततो राजन्धर्मपुत्रं युधिष्ठिरम् ।
आमन्त्र्य प्रययौ तत्र यत्र राजा सुयोधनः ।
उ[illegible]कस्तत आगम्य दुर्योधनममर्षण[illegible] ।
अर्जुनस्य समादेशं यथोक्तं सर्वमब्रवी[illegible] ।
वा[illegible]देवस्य भीमस्य धर्मराजस्य पौरुषम् ।
नकुलस्य विराटस्य द्रुपदस्य च भारत ।
सहदेवस्य च वचो [illegible]नीः ।

— (L. 33) Ds D7.10 शोचिष्यसि. — (L. 37) Om. in B2. K4 D5.6–8 च (for वा). — (L. 38) Ds D7.10 च (for तु). — (L. 40) K4 दुर्धर्षं (for कुर्वाणं). — (L. 44) =(var.) 5. 160. 8cd. — B6 om. lines 48–51; K4 om. lines 50–52. — (L. 51) Ds D10 दोषो (for दोषाद्). Dn1 D5.8 अनावृतं; Cn as above. — (L. 52) D6.7 Cn पूर्वेषां; Cnp सर्वेषां (as above). B3 उचितं; Ds D5.10 (m as above) च हितं (for चरितं). — B5 D7 om. lines 54–61. — (L. 56) K4 D5.6.8 राजन् (for तत्र). — After line 56, Ds (which om. lines 57–61) reads 24ab, and D5 reads 24.

## 14

(L. 1) K1.2.5 D5.6.7 च (for स्व-). — (L. 2) K1.2 [अ]न्वयात् (for ययौ). — (L. 3) K1 स महारथः (for प्रवरो रथः). — (L. 4) K5 प्राणवद्; Ds D2–4.8 प्रणदन्; D1 प्रणदद्; D7 प्राणदद् (for प्रणुदन्). K1.2 रथमास्थाय धिष्ठितः. — (L. 5) K D1–4.7.8 क्षत्रहा क्षत्रदेवश्च. — (L. 6) K2 जनौघान् (for जघनं). — (L. 7) =(var.) 5. 149. 53ab. Om. in K5. B3–5 Dn Ds D5.6.8–10 भक्ष्यं भोज्यं च यत्किंचित् (for the prior half). — (L. 8) = 5. 197. 19ab. Om. in K B2 D1–4.7. — (L. 9) =(var.) 5. 149. 54ab. K1.2 फाल्गुनः सकलं तत्र; D1 सर्वे सर्वकलत्रं च. D3.4 क्षत° (for कृश°). D1 यत्किंचित्सारवद्बलं. — Ds resumes from line 10. — (L. 10) Ds D5.10 °वाहाश्च; D1.10 कोष्ठागाराश्च. — (L. 11) K1.2.5 D7 गजानीकं च. K1 अशंकितः; K2 अकंपितः; K5 अतंद्रितः; D1.2.7 अनिंदितः (for युधिष्ठिरः). — (L. 12) Om. in K D1.2. — (L. 13) Cf. 5. 149. 58bc. Om. in K D1.2.7 चाभिभुः (for वा विभुः) — After line 13, D3.4 read line 16. — (L. 14) K1.2.5 D1.7 रथाश्च शतसाहस्राः

## 14

After 5. 197. 19cd, N ins.:

चेकितानः स्वसैन्येन महता पार्थिवर्षभ ।
धृष्टकेतुश्च चेदीनां प्रणेता पार्थिवो ययौ ।
सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः ।
वृतः शतस[illegible]ण रथानां प्रणुदन्बली ।
क्षत्रदेव[illegible]च रथस्थौ पुरुषर्षभौ ।
जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ।
शकटापणवेशाश्च यानं युग्यं च सर्वशः ।
तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्वं कलत्रं च यत्किंचित्कृशदुर्बलम् ।
कोशसंचयवाहाश्च कोष्ठागारं तथैव च ।
गजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः ।
तमन्वयात्सत्यधृतिः सौचित्ति[illegible]र्मदः ।
श्रेणिमान्व[illegible]दानश्च पुत्रः काश्यस्य वा विभुः ।
रथा विंशतिस[illegible]स्रा ये तेषाम[illegible]यायिनः ।
हयानां चैव कोट्यश्च महतां किङ्किणीकिनाम् ।
गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः ।
षष्टिर्नागस[illegible]णि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन्युधि सेना महात्मनः ।
क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ।
एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमतः ।

— (L. 15) K₃ पंच; B Dn D₆ दश; D₅₁ D₈₋₈.₁₀ नव (for चैव). — (L. 16) Om. in K D₁.₂. D₃.₄ read this line after 13. D₅.₆.₈ युग° (for ईषा°). — K D₁₋₈ om. line 17. — (L. 18) K₂.₅ D₂₋₄ दश (K₂ पंच) चान्यानि भारत. — After line 18, K₁.₃ B₂ D₁₋₄.₇ ins.:

विंशतिश्च सहस्राणि पञ्च चान्यानि भागशः ।

— K₄ om. lines 19–22. — (L. 19) K₃ चान्यानि (for चान्यासन्). K₁,₃ सेनाग्रे (K₃ °ना च) समस्तसु; K₂ सेनाग्रेषु च समस्तु; D₁₋₄.₇ युधि सेनासु सस्तु. — (L. 20) Prior half =(var.) 1. 3. 139ᵉ (cf. v.l.). — (L. 21) K₁.₃ राजानाम् (for राजानम्). — (L. 22) K₁.₂.₅ D₁₋₄ एतत् (for एवं). K₁.₂ D₁.₃.₄ नागबलं; K₃ D₂ एव बलं; B₂.₅ तावद्बलं; D₈ समभवद् (for तस्य बलं). D₇ एवं समभवद्बलं (for the prior half).

